रजतनिन्दाद्वारा विधेयभूतसुवर्णदक्षिणास्तुतिपरत्वे विरोधो नास्ति तथा गतिस्तुर्याश्रमे नास्तीत्यादिस्मृतिषु वेदार्थोपजीविनीष्वपि । न हि निन्दा निन्दयितुं प्रवर्तते किं तु विधेयं स्तोतुम् इति न्यायेनैवमेव स्वीकारे विरोधाभावात् । विधेयस्तुतिपरत्वे मुख्यवृत्त्यवगतार्थतिरस्कारः स्यादिति यदुक्तं तदप्यविचारचारु इष्टापत्तेरर्थवादवाक्यानां सर्वत्र तथाविधत्वाद्वज्रहस्तः पुरन्दर इत्यादि भूतार्थवादमन्तरेण तत्र स्वार्थपरत्वमपि स्वीक्रियते शास्त्रकारैः प्रशंसादित्रयाणामर्थवादानां प्रकृतेऽनुपयोगादनुल्लेखो ज्ञेयोऽत्रापि सर्वमनवद्यमेवास्त्यसति नकारे ।। ८।। नापि नवमः ।।

यतस्तार्किकैर्यथाशिष्टाचारेण हेतुना मङ्गले वेदबोधितकर्तव्यताकत्वमनुमीयते ततो नात्र संशयः ।

**"त्रयाणां वर्णानां वेदमधीत्य चत्वार आश्रमाः ।"**

**"त्रैवर्णिकानां संन्यासो विद्यते नात्र संशयः ।"**

**"शिखायज्ञोपवीतानां त्यागपूर्वकदण्डयुगित्यादि"**

वेदमूलकसर्वशिष्टाग्रगण्यकात्यायनव्यासप्रणीतस्मृतिषु त्रैवर्णिकानां संन्यासोपलम्भहेतुना वेदे क्षत्रियवैश्ययोःसंन्यासबोधिवाक्यसत्त्वानुमानकल्पनाया अनुपपत्तिः । ननु तद्बोधकवाक्यमस्ति चेत्तत्कुतो नोपलभ्यत इति चेन्मैवम् । पैङ्गीरहस्यब्राह्मणे ऋषभादीन् क्षत्रियवरानुद्दिश्य यदि मृत्योः परं शान्तमनामयं शाश्वतं पदमिच्छुरसि तत्परमहंसो भवेति विशेषतो न्यासविधायकवाक्यस्य सत्त्वात् ।

न च ऋषभनिदाघदैवरातिजनकसुशीलादिकं प्रत्येव विधिरयं न त्वितरक्षत्रियान् प्रतीति वाच्यम् । यथा छान्दोग्ये श्वेतकेतुं द्वारी कृत्याखिलमुमुक्षून्प्रति तत्त्वोपदेशः कृत उद्दालकेन मुनिना यथा वोद्योगपर्वणि अर्जुनमुत्तमाधिकारिणं द्वारीकृत्य गीतामृतमुपदिष्टमखिलमुमुक्षून्प्रति परमेश्वरेण तथात्रापि ऋषभादीनुद्दिश्य निखिलमुमुक्षुक्षत्रियान्प्रति प्रमाणराजेन वेदेन विधानात्सर्वं समीचीनमेव ।।९।। नापि दशमः।।

यतो यद्यपि अग्निहोत्रं गवालंभं संन्यासं पलपैतृकमित्यादि सामान्यवाक्यस्य संकोचके -

**"चत्वार्यब्दसहस्राणि चत्वार्यब्दशतानि च ।**
**कलेर्यदा गमिष्यन्ति तदा त्रेतापरिग्रहः।।"**

"यावद्वर्णविभागोऽस्ति यावद्वेदः प्रवर्तते ।
संन्यासमग्निहोत्रं च तावत्कुर्यात्कलौ युगे ।।"

इत्येवं द्वे वाक्ये स्तस्तथापि वर्णाश्रमयोः कारणकार्यभावभङ्गप्रसङ्ग-रूपविनिगमनासहकृतत्वादुत्तरवाक्यस्यैव संकोचकत्वं न तु पूर्ववाक्यस्य तत्र विनिगमनाविरहात् । तस्य संकोचकत्वे ब्राह्मणानामपि संन्यासे नाधिकारस्य तुल्यतयेदानीं संन्यासस्यैव सर्वथा विलयापत्तेश्चेति । किं च द्वितीयदेवलस्मृतौ त्रैविद्यवृद्धशिष्टाचारानुगृहीतायां संन्यासाऽग्न्याधानयोर्विशेषतोविहितत्वेनोक्तस्मृते-र्वेदादिप्रवृत्तिपर्यन्तं कलिकालेऽपि गवालम्भादि पदार्थत्रितयनिषेध एव पर्यवसानम् । अन्यथाग्निहोत्रस्यापि वेदादिप्रवृत्तिकाल इदानीमुपलभ्यमानस्याशास्त्रीयत्व प्रसङ्गात् । विष्णुपुराणेऽपि ।

"यत्कृते दशभिर्वर्षैस्त्रेतायां हायनेन तत् ।
द्वापरे तत्तु मासेन अहोरात्रेण तत्कलौ ।।
तपसो ब्रह्मचर्यस्य जपादेश्च फलं द्विजः ।
प्राप्नोति पुरुषस्तेन कलिः साध्वितिभाषितः ।।"

इति कलावल्पकालेन ब्रह्मचर्यजपादेरधिकं फलं वदन् ब्रह्मचर्यादि-प्रधानस्य पारिव्राजस्य कलावनुष्ठेयत्वं सूचयति पराशरः ।
भागवतेऽपि ।

"कलिं सभाजयन्त्यार्या गुणज्ञाः सारभागिनः ।
कुशलान्यत्र सिध्यन्ति नेतराणि कृतानि यत् ।।
कृतादिषु पुरा राजन्कलाविच्छन्ति संभवम् ।
कलौ खलु भविष्यन्ति नारायणपरायणाः ।।"

इति मानसपुण्यानां सिद्धिं तादृशपापानामसिद्धिं नारायणपरायणत्वं च वदन् मानसध्यानादिप्रधानं पारिव्राज्यं कलावनुष्ठेयमिति बोधयति व्यासः।। अपि च ।। सूर्यावतारत्वेन महादेवावतारत्वेन च पुराणोक्तमाहात्म्यैः श्रीमच्छङ्करभगवत्पूज्यपादैर्जगद्गुरुभिः कलौ संन्यासस्यानुष्ठितत्वात्प्रचारितत्वाच्च कलौ संन्यासोऽनुष्ठेय एव । तथा च । शिवपुराणे कालिकाखण्डे लकुटीश्वरमा-हात्म्ये नारदं प्रति सनत्कुमारवचनम् -

"कृते ज्ञानप्रदः सत्यस्त्रेतायां दत्त एव च ।
द्वापरे व्यासनामा तु कलौ शङ्कर उच्यते ।।

ब्रह्मा सत्यो हरिर्दत्तो व्यासो रुद्रः प्रकीर्तितः ।
शङ्करः सविता साक्षादीश्वरः परदैवतम् ।।
युगे युगे प्रणष्टस्य शास्त्रस्योद्धरणाय वै ।
श्रुतिस्मृत्यर्थबोधाय पाखण्डनिधनाय च ।।
सूत्रेषु तेषु कुर्वन्ति भाष्याणि सुबहूनि चेति ।"

तथा कूर्मपुराणे एकोनविंशतितमेऽध्याये -

"भविष्यत्यवतारेण शङ्करो नीललोहितः ।
श्रौतस्मार्तप्रतिष्ठार्थं भक्तानां हितकाम्यया ।।
उपदेक्ष्यति स ज्ञानं शिष्याणां ब्रह्मसंज्ञितम् ।
सर्ववेदार्थसारं हि धर्मद्विदविदर्शितात् ।।
ये तु विप्रा निषेवन्ते संन्यासेनोपचारतः ।
विजित्य कलिजान्दोषान्यान्ति ते परमं पदमिति ।।"

तस्मात्कलावपि सर्वकर्मसंन्यासो वेदान्तश्रवणाङ्गतया मुमुक्षुभिरनुष्ठेय इति सर्वं पूर्णमेव ।।१०।। नाप्येकादशः ।।

वैराग्यं द्विविधमपरं परं च । पुनरपरं त्रिविधं मन्दं तीव्रं तीव्रतरं चेति । तत्र पुत्रदारादिविषयवियोगे धिक् संसारमिति बुद्ध्या विषयजिहासा मन्दवैराग्यम् । अस्मिञ्जन्मनि पुत्रदारादि मास्त्विति स्थिरबुद्ध्या विषयजिहासा तीव्रम् । पुनरावृत्तिसहितं ब्रह्मलोकादिपर्यन्तं मास्त्विति स्थिरबुद्ध्या विषयजिहासा तीव्रतरम् । तत्र मन्दवैराग्ये कुटीचकबहूदकसंन्यासाधिकारः । तीव्रतरवैराग्ये हंससंन्यासाधिकारः । परवैराग्ये परमहंससंन्यासाधिकारः । स च द्विविधः विविदिषासंन्यासो विद्वत्संन्यासश्चेति ।

साधनसम्पन्नेन तत्त्वज्ञानमुद्दिश्य क्रियमाणः संन्यासो विविदिषासंन्यासः। गृहस्थाश्रमादौ कृतश्रवणादिभिरुत्पन्नब्रह्मसाक्षात्कारेण गृहस्थीत्यादिना विक्षिप्तचित्तस्य चित्तविश्रान्तिलक्षणां जीवन्मुक्तिमुद्दिश्य क्रियमाणः संन्यासो विद्वत्संन्यासः । तत्रोत्तरोत्तरवैराग्यस्य तद्धेतुकतुर्याश्रमस्य च मोक्षसाधनभूत-ज्ञानान्तरङ्गस्य सर्वदा दुर्लभत्वात् कृतादावपि तस्याधिकारिणः केचिदेवाति-पुण्यशालिनः श्रूयन्ते ।

कलावपि तथाविधाः केचिदासन्केचित्सन्ति केचिद् भविष्यन्तीत्येवं

स्वीकर्तव्यं भवादृशैः शिष्टैः तदभावे प्रबलप्रमाणाभावात् ।

**"प्रमादिनो बहिश्चित्ताः पिशुनाः कलहोत्सुकाः ।**
**संन्यासिनोपि दृश्यन्ते दैवसंदूषिताशयाः ।।"**

इत्यादि वाक्यस्यापि शब्दादेशजीविसंन्यासिपरत्वात् । प्रत्युत कलावेव वैराग्यहेतुदर्शनपोषकाऽनियतजीवनपुत्रादिमृतिविषयगतदुर्गन्धत्वनश्वरत्व दुःसाध्यत्वस्वल्पत्वादिदोषाणां संभवाद्वैराग्यसंभावना कृतादावेव नास्ति । एकोनत्रिंशेऽध्याये ।

**"प्रजास्तृप्ताः सदा सर्वानन्दाश्च सुखभोगिनः ।**
**अधमोत्तमता नास्ति निर्विशेषाः पुरंजय ।।**
**तुल्यमायुः सुखं रूपं तासु तस्मिन्कृते युगे ।"**

इत्यादि कौर्मवचनात् ।

अतएव स्वर्गनिवासिनां ज्ञानवैराग्ययोरतिदुर्लभत्वं श्रूयते वेद इति सर्वं निर्दोषमेव ।।११।। नापि द्वादशो विकल्पः ।।

ब्राह्मणपदस्य यौगिकत्वोपलक्षणत्वस्वीकारेणैव तस्य निरस्तत्वात् । गीताभाष्यनिर्माणतः पूर्वं चतुर्थाश्रमस्य सत्त्वासत्त्वाभ्यां व्याघाताच्च । किं च विशेष्यान्वयिन एवकारस्यान्ययोगव्यवच्छेदार्थकत्वात् । पार्थ एव धनुर्धर इत्यत्र भीष्मादीनामपि धनुर्धराणामुपलम्भादुत्कृष्टधनुर्धरे लक्षणा स्वीकृता यथा तथात्रापि एवकारस्य विशेष्यान्वितत्वेन संन्यासपदस्योत्कृष्टसंन्यासे लक्षणा । तथा च ब्राह्मणकृततुर्याश्रम उत्कृष्ट इत्यर्थः ।

तत्त्वं च तरणतारणकर्तृत्वमेवेत्युभयत्र दोषाभावेन किमवलम्ब्य हठः क्रियते श्रीमद्भिरिति न जान इति ।।१२।। नापि त्रयोदशः ।।

**"त्रयाणां वर्णानां वेदमधीत्य चत्वार आश्रमाः"**

इति कात्यायनसूत्रस्य सत्त्वात् ।

कूर्मे च द्वादशाध्याये पृथुपौत्रसुशीलस्य तुर्याश्रमग्रहणप्रस्तावे

**"सोनुगृह्याथ राजानं सुशीलं शीलसंयुतम् ।**
**शिष्यत्वे प्रतिजग्राह तपसा क्षीणकल्मषम् ।।**
**सान्यासिकं विधिं कृत्स्नं कारयित्वा विचक्षणः ।**
**ददौ तदीश्वरं ज्ञानं स्वशाखाविहितं व्रतम् ।।**

**अशेषं वेदसारं तं पशुपाशविमोचनम् ।"**

इत्यादिवाक्यानां सत्त्वात् ।

**"योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम् ।**
**स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ।।**
**उपनीय गुरुः शिष्यं महाव्याहृतिपूर्वकम् ।**
**वेदमध्यापयेदेनं शौचाचारांश्च शिक्षयेत् ।।"**

इति मनुयाज्ञवल्क्यवाक्यस्य सत्त्वाच्च । किं च बहूनि वाक्यान्यत्र नापेक्षितानि क्षत्रियादिषु वेदाध्ययनस्य राजमार्गप्राप्तत्वात् । यदुक्तं **"तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्"** इत्यादिश्रुतिदर्शितगुर्वलाभेन न कस्यापि तुर्याश्रमेऽधिकार इति तदपि न सांप्रतम् । श्रोत्रियाणां भवादृशानां सर्वजनीनोपलब्धेस्तत्पूर्वकब्रह्मनिष्ठानामपीदानीं सत्त्वाच्च ।

ननु सान्ति चेद्ब्रह्मनिष्ठाः कुतो नोपलभ्यन्त इति चेन्मैवम् । ब्रह्मनिष्ठायाः स्वसंवेद्यत्वात् । ईर्ष्यामात्सर्यादिग्रस्तचित्तैस्तु जन्मशतैरपि ज्ञातुमशक्यत्वात्।

न च प्रजहाति यदा कामान्सर्वान्पार्थमनोगतानित्यादिभगवदुक्त-स्थितप्रज्ञलक्षणानां सत्त्वात् तैस्ते कथं न ज्ञास्यन्त इति वाच्यम् । तेषां प्रायोवादत्वात् । तदुक्तं सुरेश्वराचार्यैः -

**प्रारब्धकर्मनानात्वाद्बुधानामन्यथान्यथा ।**
**वर्तनं तेन शास्त्रार्थे विभ्रान्तव्यं न पण्डितैरिति ।।**

न च व्यापारवतां कथं निर्व्यापारब्रह्मनिष्ठा इति तत्तद्व्यापारस्य तत्तदिन्द्रियनिष्ठत्वात् । तदुक्तं भगवता-

**"नैव किंचित्करोमीति युक्तो मन्येत तत्त्ववित् ।**
**पश्यन् शृण्वन् ............इति धारयन्निति ।।"**

किंच न निर्व्यापारत्वं ब्रह्मनिष्ठायां प्रयोजकमन्यथा पाषाणानामपि ब्रह्मनिष्ठा भवेत् । न केवलं श्रुत्युक्तगुरोरेव दौर्लभ्यं प्रत्युत उपदेशक्रमोरात्म-व्यवस्थामात्रपालनम् ।

**"ज्ञप्तेस्तु कारणं शुद्धा शिष्यप्रज्ञैव केवला ।।**
**न शास्त्रैर्नापि गुरुणा दृश्यते परमेश्वरः ।**
**दृश्यते स्वात्मनैवात्मा स्वया सत्त्वस्थयाधिप ।।"**

इत्यादि वसिष्ठवाक्येषु शिष्याणामेव दुर्लभत्वं स्वकल्याणार्थमुपदेशे प्राधान्यं च प्रतीयते । किं च हिततमात्मविद्योपदेष्टृदैशिकाभावे जगति गुरुत्वमात्रमेव भज्यते सर्वत्रापेक्षसंभवात् ।

मन्त्रोपदेष्टर्यप्यागमोक्तगुरुधर्माणामसंभवात् । ते च धर्मास्तत्रैवावलोकनीयाः विस्तरभिया न लिखिता इति चिन्तनीयं श्रीमद्भिः।

यदुक्तं पतत्यसौ ध्रुवं भिक्षुर्यस्य भिक्षोर्द्वयं भवेत् । धीपूर्वं रेत उत्सर्गं द्रव्यसंग्रह एव चेत्यादिस्मृतिनिन्दितकर्ममात्रपरबहुतरभिक्षुदर्शनाच्च सर्वैर्वर्णैरनुररीकरणमेव श्रेय इति तदुत्तरं तु

**द्वयोर्यत्र समो दोषः परिहारोऽपि तत्समः।**
**नैकः पर्यनुयोक्तव्यस्ताद्दगर्थविचारणा ।।** इतिन्यायेन।
**"सत्यं दानं क्षमा शीलमानृशंस्यं तपो घृणा ।**
**दृश्यन्ते यत्र राजेन्द्र स ब्रह्मण इति स्मृतिः ।।"**

"यत्रैतन्न भवेत्सर्वं तं शूद्रमिति निर्दिशेदिति " नहुषं प्रति युधिष्ठिरवाक्यं हेमाद्रौ ।

**'अनादाविह संसारे दुर्वारे मकरध्वजे ।**
**कुले च कामिनीमूले का जातिपरिकल्पना ।।**

इत्यादि स्मृतिवाक्यम्। वह्निपुराणे ।

**"वृत्ताद्येव ब्राह्मणलक्षणमुत्तमम् ।"**
**"न जातिर्न कुलं राजन् न स्वाध्यायः श्रुतं न च ।**
**कारणानि द्विजत्वस्य वृत्तमेव हि कारणम् ।।**
**किं कुलं वृत्तिहीनस्य करिष्यति दुरात्मनः ।**
**कृमयः किं न जायन्ते कुसुमेषु सुगन्धिषु ।।**
**नैकमेकान्ततो ग्राह्यं पठनं हि विशांपते ।**
**वृत्तमन्विष्यतां तात रक्षोभिः किं न पठ्यते ।।**
**बहुना किमधीतेन नटस्येव दुरात्मनः ।**
**तेनाधीतं श्रुतं वापि यः क्रियामनुतिष्ठति ।।**
**कपालस्थं यथा तोयं श्वहस्ते च यथा पयः ।**
**दूष्यं स्यात्स्थानदोषेण वृत्तहीनं तथा श्रुतम् ।।**
**चतुर्वेदोऽपि दुर्वृत्तः शूद्रादल्पतरः स्मृतः ।**
**तस्माद्विद्धि महाराज वृत्तं ब्राह्मणलक्षणम् ।।"**

सत्यं दमस्तपो दानमहिंसेन्द्रियनिग्रहः ।
दृश्यन्ते यत्र राजेन्द्र स ब्राह्मण इति स्मृतः ।।
सत्यं दानं तपोऽद्रोह आनृशंस्यं क्षमा घृणा ।
तपश्च दृश्यते यत्र स ब्राह्मण इति स्मृतः ।।"

इति ब्रह्माण्डपुराणवाक्यम् ।

"तपो धर्मो दया दानं सत्यं ज्ञानं श्रुतिर्घृणा ।
विद्याविनयमस्तेयमेतद्ब्राह्मणलक्षणम् ।।"

इतिं शातातपोक्तिः ।।

"स्वाध्यायवान्नियमवांस्तपस्वी ज्ञानविच्च यः ।
क्षान्तो दान्तः सत्यवादी विप्रः पात्रमिहोच्यते ।।"
"आत्मार्थं यः पचेदन्नं न देवातिथिकारणात् ।
नार्हत्यसावपि श्राद्धं स चोक्तो ब्रह्मराक्षसः ।।"

इति ब्रह्माण्डपुराणवाक्यम् ।।

"गृहस्थस्तु यदा पश्येद्वलीपलितमात्मनः ।
अपत्यस्यैव चापत्यं तदारण्यं समाश्रयेत् ।।"

इति मनूक्तिः ।।

"यज्ञार्थमर्थं भिक्षित्वा यो न सर्वं प्रयच्छति ।
स याति भासतां विप्र काकतां वा शतं समाः ।।"

इत्यपि मनूक्तिरेवेत्यादिशतसहस्रवाक्यानि यद्यपि सन्ति ऋषिप्रणीतानि वृत्तशून्यब्राह्मणनिन्दापराणि तथापि मया तु भूदेवानां श्रीमतामिवापलापवाक्यं वक्तुं न शक्यते । परन्तु स्वयमूहनीयो वृद्धिमिच्छतो मूलहानिरिति न्यायापत्तिरूपवज्रपात इति । यदुक्तं यद्वै मनुरवदत्तद्भेषजमिति श्रुतिसमर्थितप्रामाण्यवन्ति ।

"या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः ।
सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः ।।
चातुर्वर्ण्यं त्रयो वेदाश्चत्वारश्चाश्रमाः पृथक् ।
भूतं भव्यं भविष्यच्च सर्वं वेदात्प्रसिद्ध्यति ।"

इत्यादीनि मनुवचनानि च श्रुत्यननुसारिस्मृतीनामप्रामाण्यमेव बोधयन्तीति । तदपि प्रलापमात्रमेव ।

या वेदबाह्या इत्यस्यास्तद्व्याख्यातृभिर्याः स्मृतयो वेदमूलानि भवन्ति

दृष्टार्थवाक्यानि चैत्यवन्दनात्स्वर्गो भवतीत्यादीनि यानि चासत्तर्कमूलानि देवताऽपूर्वादिनिराकरणात्मकानि वेदविरुद्धानि चार्वाकदर्शनानि सर्वाणि परलोके निष्फलानि यस्मान्नरकफलानि तानि मन्वादिभिः स्मृतानीति व्याख्यातत्वात् ।

को वै वदति बौद्धश्रावकनिर्ग्रन्थकपाञ्चरात्रपाशुपतनिर्मितानां श्रुत्यननुसारिस्मृत्याभासानामप्रामाण्यं नास्तीति ? धन्या नवीनाः पण्डिता ये अनृतस्ववाक्यपालनाय परलोकमनादृत्यश्रुत्यनुसारि व्यासादिप्रणीत स्मृतीनामप्यप्रामाण्यं कूटव्याजेन ब्रुवन्ति । यदप्युक्तं त्रैवर्णिकसंन्यासपरस्मृतिगत-संन्यासपदं वानप्रस्थाश्रमपरमिति । तत्रापि मुख्यवृत्तित्यागपूर्वकगौणवृत्तिस्वीकारे युक्तिं न पश्यामि प्रत्युत मुख्यवृत्तिस्वीकारे युक्तिरस्ति । तथा हि क्षत्रियादीनामुपवीतग्रहणसमये दण्डग्रहणस्य प्राप्तत्वात् ।

द्विजत्वाधायकवेदसारगायत्र्युपदेशप्राप्त्या व्याहृतीनामपि प्राप्तत्वात् व्याहृतिघटितसंन्यस्तं मयेति प्रतिज्ञारूपस्य प्रेषमन्त्रत्वात् क्षत्रियादिषु तत्सत्त्वेपि को विरोधः । किं च त्रयो धर्मस्कन्धाः, इत्यादिना वेदेन धर्ममात्राधिकृतत्वेन प्रत्यक्षाणां त्रयाणामाश्रमिणां सर्व एते पुण्यलोका भवन्तीत्यविशेषेण परामर्शकत्वात्पुण्यलोकभाक्त्वेन विनियुक्तानां निराकाङ्क्षाणां न पुनर्ब्राह्मसंस्थशब्देन परामर्शः संभवतीति परिशेषादाकाङ्क्षितत्वाच्च संन्यासिनामेव परामर्शादपि त्रैवर्णिकसंन्यासपरस्मृतिगतसंन्यासपदं मुख्यया वृत्त्या क्षत्रियादिपरमेवेति ज्ञेयम्।

अतो मात्सर्यासूयामन्तरेण किं विशेषमादाय तुर्याश्रमे क्षत्रियादी-नामधिकारो नास्ति इति वदन्ति नवीना इति न जाने । तत्र पूज्यतायां विवादश्चेत्तन्न ।

> "चतुर्वेदस्तु यो विप्रो सोमयाजी शतक्रतुः ।
> तस्मादपि यतिः श्रेष्ठस्तिलपर्वतमन्तरम् ।।
> एकदण्डी त्रिदण्डी वा शिखी मुण्डित एव वा ।
> काषायमात्रसारोऽपि यतिः पूज्यो युधिष्ठिरः ।।
> अष्टाक्षरेण मन्त्रेण यतयस्तु नमस्कृताः ।
> स्मृतनारायणा घ्नन्ति प्राणिनां पापपञ्जरम् ।।"

इति जाबालश्रीकृष्णाङ्गिरःप्रणीतसामान्यवाक्यानां सत्त्वेऽपि न तत्र मुमुक्षूणामादरो हठश्च तेषां शारीरकव्यवहारस्यारब्धतन्त्रत्वात्। यच्चास्मत्कृत-व्यवस्थाखण्डनावसरे त्वयोक्तं महाप्रस्थानगमनसमये द्रौपद्या सह गमनेन

युधिष्ठिरस्य तुर्याश्रमेऽधिकारसंभावना नास्तीति । तदपि मन्दम् । स्त्रियैकसार्थवाहित्वमात्रस्य संन्यासभञ्जकत्वे शुकादीनामपि संन्यासो न स्याद्देशकालाध्वादीनां वैचित्र्यात् ।

यस्य कस्यापि कदाचिदेकसार्थवाहित्वस्य संभावनायाः संभवात् ।। अतो रागेण स्त्रिया सहैकसार्थवाहित्वस्य तुरीयाश्रमभञ्जकत्वं स्वीकर्तव्यं तच्च तत्र न संभवति । संसारस्य नश्वरत्वादिकमवलोक्य सर्वेषां तेषामौदासीन्येनैच्छिकमहाप्रस्थानगमनस्य भारते श्रवणात् ।

आत्मन्यग्नीन् समारोप्य गृहस्थः प्रव्रजेद्गृहादित्यादिवाक्येन युधिष्ठिरे तुर्याश्रममन्तरेणात्मन्यग्निसमारोपणासंभवाच्च । अतिशूद्रपदानामसाधूत्तरं तु-

**"आत्मानं यदि निन्दन्ति स्वात्मानं स्वयमेव हि ।**
**शरीरं यदि निन्दन्ति सहायास्ते जना मम ।।"**

इत्येव, लौकिकोत्तरं त्वीश्वर एव दातुं शक्तः ।

ननु –

**"अकार्यकारिणां दानं वेगो नद्याश्च शुद्धिकृत् ।**
**शोध्यस्य मृच्च तोयं च संन्यासोऽथ द्विजन्मनाम् ।।"**

इति याज्ञवल्क्यादिस्मृत्येकवाक्यत्वेन ।

**"आत्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजेद्गृहात्"**

इत्यादि मनुवाक्यस्थब्राह्मणपदस्य त्रैवर्णिकोपलक्षणत्वात् ।

**"प्रव्राज्यावसिता यत्र त्रयो वर्णा द्विजातयः ।**
**निर्वासं कारयेद्विप्रं दास्यं क्षत्रियवैश्ययोः ।।"**

इति कात्यायनवाक्यविहितप्रायश्चित्तसूचितार्थापत्तेश्च सर्वतो बलवत्याः सत्त्वात् । जाबालादिश्रुतिगतब्राह्मणपदस्येतरश्रुतिस्मृतीतिहासपुराण-शिष्टाचारानुरोधेन त्रैवर्णिकोपलक्षणार्थत्वाच्च। बहुतरश्रुतिस्मृतीनां सत्त्वाच्च भवतु तुर्याश्रमे त्रैवर्णिकस्याधिकारः परन्तु क्षत्रियवैश्ययोः कुलशुद्ध्यभावान्न संन्यासाधिकार इति चेन्न । मानसव्यभिचारस्य दृष्टिव्यभिचारस्य गुप्तव्यभिचारस्य च दुर्वारत्वेन "ये यजामहे" इति श्रुत्यापि संदिग्धतया बोधनेन च ब्राह्मणादीनां सर्वेषामपि कुलशुद्धेः शपथनिर्णेयत्वेन तुल्यत्वात् । व्यासवसिष्ठादिकारकोत्पत्तेश्च विचारणीयत्वाच्च ।

न च,

"चत्वारो ब्राह्मणस्योक्ता आश्रमाः श्रुतिचोदिताः ।
क्षत्रियस्य त्रयः प्रोक्ता द्वावेको वैश्यशूद्रयोरिति ।।"

बृहद्याज्ञवल्क्यवाक्यविरोधः । तस्यापि सामान्यवाक्यत्वात् ।

"अकार्यकारिणां दानं वेगो नद्याश्च शुद्धिकृत् ।
शोध्यस्य मृच्च तोयं च संन्यासोऽथ द्विजन्मनाम् ।।"

इति विशेषविधायकनवीनयाज्ञवल्क्यवचनेन विरोधात् ।

"त्रयाणां वर्णानां वेदमधीत्य चत्वार आश्रमाः"

इतिस्मृत्यन्तरविरोधादुक्तभारतवचनविरोधाच्चाश्रमाभाववेदनेऽशक्तत्वात् । दण्डाद्यभावबोधकत्वाच्चेति बोध्यम् ।

अतः कदलीस्तम्भवदसारेऽतीव मनो न देयं किंतु निरूपयितुमारब्धं निखिलैरपि पण्डितैः । अज्ञान पुरतस्तेषां भाति कक्षासु कासुचित् । किमिदं किमस्य रूपं कथमिदमभूदमुष्य को हेतुरिति न कदापि विचिन्त्यं मायेति धीमता विश्वमित्यादिवाक्यमवलोक्य प्रपञ्चस्यानिर्वचनीयतां मनसि निधाय कलौ स्थानानि पूज्यन्त इतिवत् ।

कलौ यावद्वेदबोधितवर्णाश्रमविभागोऽस्ति तावन्महाजनप्रसिद्ध्यनुसारेण व्यवहारः साधनीयः किं तुषविघातेन काकदन्तपरीक्षया वा । अखिलसंसारस्य मिथ्यात्वं शरीरादीनां च नश्वरत्वं दृढीकृत्य यत् ज्ञानात्सर्वानर्थनिवृत्तिः परमानन्दावाप्तिश्च भवति तत्रैव परिपूर्णसच्चिदानन्दत्रिकालाबाध्यवस्तुनि मनो देयं तत्साधने आर्जवदयाशान्तीश्वराराधने निष्कामकर्मणि वेति तु सारम् ।

"आत्मानं चेद्विजानीयादयमस्मीति पूरुषः ।
किमिच्छन्कस्य कामाय शरीरमनुसंज्वरेत् ।।"

"एवं ह वाव न तपति"

"किमहं साधु नाकरवम् किमहं पापमकरवम्"

"तरति शोकमात्मवित्"

"समाधिनिर्धूतमलस्य चेतसो
निवेशितस्यात्मनि यत्सुखं भवेत् ।
न शक्यते वर्णयितुं तदा गिरा
स्वयं तदन्तःकरणेन गृह्यते ।।"

"ब्रह्मविद् ब्रह्मैव भवति"

"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ।।"
"ग्रन्थमभ्यस्य मेधावी ज्ञानविज्ञानतत्परः ।
पलालमिव धान्यार्थी त्यजेच्छास्त्रमशेषतः ।।"
"संसारमेव निःसारं दृष्ट्वा सारदिदृक्षया ।
प्रव्रजन्त्यकृतोद्वाहा परं वैराग्यमाश्रिताः ।।"
"वृक्षाग्राच्च्युतपादो यद्वदनिच्छन्नपि क्षितौ पतति ।
तद्वद्गुणपुरुषज्ञोऽनिच्छन्नपि केवली भवति ।।"
"यथा स्वप्नप्रपञ्चोऽयमपि मायाविजृम्भितः ।
इति यो वेदवेदान्तैः सोऽतिवर्णाश्रमी भवेत् ।।"

इत्यादिश्रुतिस्मृतिशतवाक्यमवलोक्य "मैत्री करुणामुदितोपेक्षा" इति वृत्तिचतुष्टयात्मकं वर्म धृत्वा सारमेव ग्राह्यं बुद्धिमद्भिः । प्रसंगादुत्तर व्याजेनाधिकोक्तिः क्षन्तव्या ।

न पण्डिताः साहसिका भवन्ति
श्रुत्वापि ते संतुलयन्ति तत्त्वम् ।
तत्त्वं समादाय समाचरन्ति
स्वार्थं च कुर्वन्ति परस्य चार्थम् ।।१।।
विद्वांसो न हि किं श्रुतिस्मृतिसदाचारेष्वभिज्ञाः क्षितौ
तेषां मोदभरार्थ एव न पुनः स्वप्रौढिविख्यापकः ।
संन्यासे नृपवैश्ययोरधिकृतौ धूर्तान्यथावञ्चितः
स्वान्तध्वान्तविनाशको बुधजनैर्बोध्यो ममायं श्रमः ।।२।।
हे धीरा बहुशास्त्रशीलनमिलद्बोधाः क्षमाभूषणा
स्तप्तास्तीव्रशिखैर्भवाख्यगहने मात्सर्यदावानलैः ।
एतस्मिन् सरसि त्रयोदशपदे सद्युक्तिपाथोभरे
मग्नीभूय विधीयतां निजमनोदन्तावलः शीतलः ।।३।।

शाके पाण्डवहस्ति वाजिकुमिते मासेऽश्वयुक्संज्ञके ।
शुक्लब्रह्मतिथौ बुधे पवनभे नेपालदेशे शुभे ।
गौरीशाश्रमसंज्ञकैर्यतिवरैः संन्यासकासारकः
श्रीनारायणसन्निधौ विरचितो भूयाद्बुधानां मुदे ।।४।।

श्रीरस्तु ।। [त्रै० संन्यास०]

।। इति श्रीमत्परमहंसश्रीगौरीशाश्रमसंज्ञकयतिवरविरचितोऽयं त्रैवर्णिकसंन्यासकासारकः समाप्तिमगमत् ।।

*

# द्विजातिमात्रस्य संन्यासाधिकारवाक्यानि

"त्रयाणामपि वर्णानां श्रुतौ संन्यासदर्शनात् ।
ब्राह्मणस्यैव संन्यास इति श्रुत्या विरुध्यते ।।१।।
लिङ्गं च न्यायरहितं प्रामाण्याय न कल्पते ।
ब्राह्मणोक्तिबलात्तस्मात्कामितोऽर्थो न सिध्यति ।।२।।

[वृ० भा० वा०१/४/१६५१–१६५२]

उपलक्षणं वा तद्ग्राह्यं ब्राह्मणग्रहणं श्रुतौ ।
ब्राह्मणस्य प्रधानत्वाद्युक्तं तदुपलक्षणम् ।।३।।

[वृ० भा० वा० १/४/१६५३]

अशनायादिकांस्तस्मात्कार्यकारणलक्षणान् ।
तद्विरुद्धात्मविज्ञानाद्ध्वंसित्वाऽऽत्मैकलो भवेत् ।।४।।
परमात्मस्वभावोऽयं स्वयं श्रुत्वा प्रपञ्चितः ।
एतमेव तमात्मानं विदित्वोक्तेन वर्त्मना ।
व्युत्थाय ब्राह्मणा यत्नाद्भिक्षाचर्यं चरन्ति हि ।।५।।
अधिकारिविशेषस्य ज्ञानाय ब्राह्मणग्रहः ।
न संन्यासविधिर्यस्माच्छ्रुतौ क्षत्रियवैश्ययोः ।।६।।
त्रयाणामविशेषेण संन्यासः श्रूयते श्रुतौ ।
यदोपलक्षणार्थं स्याद् ब्राह्मणग्रहणं तदा ।।७।।

[वृ० भा० वा० ३/५/८७–८९]

ब्रह्मचर्यादेव प्रव्रजेदित्यादि श्रुतौ वर्णत्रयस्य सामान्येन संन्यासः श्रूयते न च ब्राह्मणग्रहानुसारेण सामान्यश्रुतिर्विशेषे नियम्यते --

"ब्राह्मणः क्षत्रियो वाऽपि वैश्यो वा प्रव्रजेद् गृहात्"

इति विशेषस्मृत्यनुग्रहीतसामान्यश्रुतेः संकोचायोगाद्यदा ब्राह्मणवत्क्षत्रिय-वैश्ययोरपि संन्यासाधिकारस्तदा विशेषणमुपलक्षणार्थमाचाराद्यष्टिस्तु प्रत्युक्तेतिभावः ।

कर्माधिकारविच्छेदि ज्ञानं चेदभ्युपेयते ।
कुतोऽधिकारनियमो व्युत्थाने क्रियते बलात् ।।८।।
प्रत्यग्याथात्म्यविज्ञानस्वभावश्चेत्समर्थ्यते ।
व्युत्थानं यस्य यस्य स्यात्स स व्युत्थातुमर्हति ।।९।।

एवं चेद्ब्राह्मणोक्तिः स्याद्ध्वस्ताविद्यगृहीतये ।
स ब्राह्मण इति स्पष्टं श्रुतिरन्ते च वक्ष्यति ।।१०।।

[बृ० भा० वा० ३/५/१०–१२]

उक्तब्राह्मणसादृश्यं सर्वकर्मनिरासतः ।
नैष्कर्म्यसाधनेनैव ब्राह्मणः स्याद्यथोदितः ।।११।।
इत्येषोऽर्थो विधेयोऽत्र येनेति वचसा श्रुतेः ।
स्मृतयोऽपीममेवार्थं तत्र तत्र प्रचक्षते ।।१२।।
ब्रह्मचर्याश्रमादेव प्रव्रजेदिति भूरिशः ।
संन्यासमेव ब्रुवते मुक्तये सर्वकर्मणाम् ।।१३।।
श्रुतयः स्मृतयश्चोच्चैः शुद्धन्यायसमाश्रयात् ।
सर्वकर्मनिरासेन ब्राह्मण्यं लभते ततः ।।१४।।

[बृ० भा० वा० ३/५/१९८–१९९, २०३–२०४]

साधनेनैतदैकात्म्यं येन येन चिकीर्ष्यते ।
तेन तेन दृगेवाऽऽत्मा नातिशीतिर्मनागपि ।।१५।।
अथवा लक्षणोक्तिः स्याद्यथोक्तब्रह्मवेदिनः ।
येनेदृगेव चिह्नेन ब्राह्मणस्तेन लक्ष्यताम् ।।१६।। [बृ भा० वा०]

"ब्राह्मणाःक्षत्रिया वैश्या द्विजाः प्रोक्तास्त्रयस्तथा ।
मातृतश्चोपनयनाद्द्विजत्वं प्राप्यते त्रिभिः ।।१७।।

[बृ० ना० पु० १/२४/८]

ब्राह्मणक्षत्रियविशां त्रयाणां मुनिसत्तम ।
चत्वार आश्रमाः प्रोक्ताः पंचमो नोपपद्यते ।।१८।।
ब्रह्मचारी गृही वानप्रस्थो भिक्षुश्च सत्तम ।
चतुर्भिराश्रमैरेभिः साध्यते धर्म उत्तमः ।।१९।।"

[बृ० ना०पु० १/२४/३२–३४]

" मोक्षाश्रमं यश्चरते यथोक्तं
शुचिः स्वसंकल्पितयुक्तबुद्धिः ।
अनिंधनं ज्योतिरिव प्रशान्तं
स ब्रह्मलोकं श्रयते द्विजातिः ।।२०।।"

[बृ० ना० पु० १/२७/१०७]

चतुर्णामाश्रमाणां तु प्रोक्ता ये विधिवद्द्विजाः ।।२१।।

[कू० पु० १/२/१००].

"मुखबाहूरुपादेभ्यो ब्राह्मणाद्याः समुत्थिताः ।
ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा इत्यपि ते स्मृताः ।। २२।।

[अहि० सं० १५/५]

## तेषु त्रैवर्णिकानां चातुराश्रम्यम्

"विहितं चातुराश्रम्यं त्रयाणां तत्र नारद ।
ब्रह्मचारी गृहस्थो वा वानप्रस्थोऽपि भिक्षुकः ।।२३।।"

[अहि० सं० १५/८– ८ $\frac{१}{२}$]

"एवं वनाश्रमे तिष्ठन् पातयंश्चैव किल्विषम् ।
चतुर्थमाश्रमं गच्छेत् संन्यासविधिना द्विजः ।।"२४।।

[हारीत० ६/२]

"चतुर्थमाश्रमं गच्छेज्जितक्रोधो जितेन्द्रियः ।
अग्निमात्मनि संस्थाप्य द्विजः प्रव्रजितो भवेत्" ।।२५।।

[संवर्त० १०६]

"कृत्वेष्टिं विधिवत्पश्चात्सर्ववेदसदक्षिणाम् ।
आत्मन्यग्नीन्समारोप्य द्विजो ब्रह्माश्रमी भवेत् ।।२६।।"

[शंख० ७/१]

"त्रयो वर्णा द्विजातयो ब्राह्मणक्षत्रियवैश्याः ।।"२७।।

[वसिष्ठ० २/२]

"अकार्यकारिणां दानं वेगो नद्याश्च शुद्धिकृत् ।
शोध्यस्य मृच्च तोयं च संन्यासो वै द्विजन्मनाम् ।।"२८।।

[याज्ञ० ३/१/३२]

"अग्नीनात्मनि संस्थाप्य द्विजः प्रव्रजितो भवेत् । [कू०पु०२/२८/२]
योगाभ्यासरतः शान्तो ब्रह्मविद्यापरायणः ।।२९।।"

[पद्म पु० स्व० ख० ३/५९/२]

"दशलक्षणकं धर्ममनुतिष्ठन्समाहितः ।
वेदान्तान्विधिवच्छ्रुत्वा संन्यसेदनृणो द्विजः ।।३०।। [मनु०]
"आपत्संन्यासकार्ये तु नियमा निखिला अपि ।
निवर्तन्ते द्विजातीनां प्रेषमात्रेण केवलम्" ।।३१।।

[लौगाक्षि०]

"वनवासात्परिश्रान्तः प्रव्रजेद्विधिपूर्वकम् ।
व्याध्याविष्टो विरक्तो वा ब्रह्मवित्संन्यसेद् द्विजः" ।।३२।। [अंगिरा०]

"मोक्षाश्रमं यश्चरते यथोक्तं
शुचिस्सुखं कल्पितबुद्धियुक्तः ।
अनिंधनं ज्योतिरिव प्रशान्तः
स ब्रह्मलोकं श्रयते द्विजातिः ।।३३।।

[वि०पु०३/१०/३३], [ब्र०पु०२२२/५६]

"प्राजापत्याग्निरूप्येष्टिमाग्नेयीमथवा द्विजः ।
प्रव्रजेत्तु गृही विद्वान् वनाद्वा श्रुतिचोदनात् ।।३४।।
प्रकर्त्तुमसमर्थोऽपि जुहोति यजति क्रियाः ।
अन्धः पङ्गुर्दरिद्रो वा विरक्तः संन्यसेद् द्विजः ।।"३५।।

[कू० पु० १/३/९–१०]

"ब्राह्मणः क्षत्रियो वैश्यस्ततो गच्छेद्वनं कृती ।
संन्यसेद्वन्धनाशाय सर्वभूतदयापरः ।।३६।।"

"ऋणत्रयमपाकृत्य निर्ममो निरहंकृतः ।
ब्राह्मणः क्षत्रियो वाथ वैश्यो वा प्रव्रजेद्गृहात् ।।३७।।"

"त्रयाणां वर्णानां वेदमधीत्य चत्वार आश्रमाः ।।३८।।"

इत्यादि स्मृतिवृन्दस्य सत्त्वाच्च ।

"त्रैवर्णिकानां संन्यासो विद्यते नात्र संशयः ।
शिखायज्ञोपवीतानां त्यागपूर्वैकदण्डयुग् ।।३९।।"

इति ब्रह्माण्डपुराणात् ।

"वैराग्योत्पत्तिमानेव संन्यासे परियुज्यते ।
रागवान्नतु विप्रोपि वेदवेदाङ्गवित्तमः ।।४०।।"

इति ब्रह्मवैवर्तपुराणात् ।

"श्रुतिस्मृतिपुराणानां विरोधो यत्र दृश्यते ।
तत्र श्रौतप्रमाणं स्यात्तयोर्द्वैधे स्मृतिर्वरा ।। ४१।।
ब्राह्मणः क्षत्रियो वैश्यस्त्रयो वर्णा द्विजातयः ।
श्रुतिस्मृतिपुराणोक्तधर्मयोग्यास्तु ते नराः ।।४२।।"

[व्यास०१/४–५]

'तस्मादेवंविदित्यत्र श्रुतिः स्पष्टं यथोदितम् ।
निःशेषकर्मसंन्यासं स्वयमेव प्रवक्ष्यति ।।४३।।

[वृ० भा० वा० ३/५/१४२]

सर्वकर्माण्यतस्त्यक्त्वा प्रत्यक्प्रवणबुद्धयः ।
मोहं भित्त्वाऽऽत्मसंबोधाद्ययुः कैवल्यमुत्तमम् ।।४४।।"
इति भाल्लविश्रुतिवचः सम्यग्ज्ञानस्य जन्मने ।
संन्यासं साधनं वक्ति वाङ्मनःकायकर्मणाम् ।।४५।।

[वृ०भा०वा०३/५/१४५-१४६]

समाप्य ब्रह्मचर्यं च गृही तस्माद्भवेद्द्विजः ।
गृहाश्रमं समाप्याथ वानप्रस्थं समापयेत् ।।४६।।
यथोक्ताश्रमवासार्थं सामर्थ्यान्नियमो भवेत् ।
एवं सति समर्थः स्यात्सर्वाश्रमसमुच्चयः ।।४७।।
वानप्रस्थाश्रमादूर्ध्वं प्रव्रजेदविचारयन् ।
प्रत्यक्षश्रुतिमूलोऽयं सर्वाश्रमसमुच्चयः ।।४८।।
कषायं पाचयित्वा च श्रेणीस्थानेषु च त्रिषु ।
प्रव्रजेच्च परं स्थानं पारिव्राज्यमनुत्तमम् ।।४९।।
इति व्यासस्मृतौ वाक्यं प्रत्यक्षश्रुतिबन्धनम् ।
तथाऽन्यान्यपि विद्यन्ते वाक्यान्यत्र सहस्रशः ।। ५०।।
ब्रह्मचर्याश्रमादेव यदि वा प्रव्रजेद्द्विजः ।
गृहाच्च प्रव्रजेत्तद्वत्प्रव्रजेच्च वनात्तथा ।।५१।।
अत्र त्रैवर्णिकाधिकारद्योतनार्थं द्विजग्रहणम्
विकल्पेनैव व्याख्यात एकद्वित्रिसमुच्चयः ।
कषायपक्तिमापेक्ष्य विकल्पोऽयं त्रिधोदितः ।।५२।।

[वृ० भा० वा० ३/५/१४९-१५५]

सर्वकर्मपरित्यागात्संत्यक्ताशेषसाधनः ।
श्रुत्युक्तोऽत्र परिव्राट् स्यादैकात्म्यज्ञानजन्मने ।।५३।।
मुण्डोऽपरिग्रहश्चेति प्रत्यक्षश्रुतिवाक्यतः ।
तद्विरुद्धस्मृतेर्वाक्यं नापेक्ष्यं दुर्बलत्वतः ।।५४।।

[वृ०भा० वा० ३/५/१५९-१५८]

*

# संन्यासाश्रमकालनिर्णयः

अप्रमत्तः कर्मभक्तिज्ञानसंपन्नः स्वतन्त्रो वैराग्यमेत्य ब्रह्मचारी गृही वानप्रस्थो वा मुख्यवृत्तिकश्चेद्ब्रह्मचर्यं समाप्य गृही भवेद्गृहाद्वनीभूत्वा प्रव्रजेद्यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा वनाद्वाऽथ पुनरव्रती वा व्रती वा स्नातको वाऽस्नातको वोत्सन्नाग्निरनग्निको वा यदहरेव विरजेत्तदहरेव प्रव्रजेत्तद्धैके प्राजापत्यामेवेष्टिं कुर्वन्त्यथवा न कुर्यादाग्नेय्यामेव कुर्यात् ।।१।।"

[ना० प० उ० ३/७७]

"चत्वारिंशत्संस्कारसम्पन्नः सर्वतो विरक्तश्चित्तशुद्धिमित्याशासूयेर्ष्याहंकारं दग्ध्वा साधनचतुष्टयसम्पन्न एव संन्यस्तुमर्हति ।। २।।"

[सं० उ० २/१] [ना० प० उ० २/२]

"कथं संन्यासलक्षणम् । स होवाच याज्ञवल्क्यो ब्रह्मचर्यं समाप्य गृही भवेत्। गृहाद्वनीभूत्वा प्रव्रजेत् । यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा वनाद्वा । अथ पुनर्व्रती वाऽव्रती वा स्नातको वाऽस्नातको वा उत्सन्नाग्निरनग्निको वा यदहरेव विरजेत्तदहरेव प्रव्रजेत् ।।३।। [या० उ०]

"यदा मनसि वैराग्यं जातं सर्वेषु वस्तुषु ।
तदैव संन्यसेद्विद्वानन्यथा पतितो भवेत् ।।४।।"
वमनाहारवद्यस्य भाति सर्वैषणादिषु ।
तस्याधिकारः संन्यासे त्यक्तदेहाभिमानिनः ।।५।।

[मैत्रे० उ० २/१८-१९]

"ब्रह्मचर्यं समाप्य गृही भवेत् । गृही भूत्वा वनी भवेत् । वनी भूत्वा प्रव्रजेत् । यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा वनाद्वा । अथ पुनरव्रती वा व्रती वा स्नातको वाऽस्नातको वा उत्सन्नाग्निरनग्निको वा यदहरेव विरजेत्तदहरेव प्रव्रजेत्"।।६।। [जा० उ० ]

"यदह्नि विरजेद्धीरस्तदह्नि च परिव्रजेत् ।
प्राजापत्यां निरूप्येष्टिं सर्ववेदसदक्षिणाम् ।।
आत्मन्यग्नीन् समारोप्य प्रव्रजेद्ब्राह्मणो गृहात् ।।७।।

[आग्ने० पु० १६१/२-२ 1/2]

"यदा मनसि संजातं वैतृष्ण्यं सर्ववस्तुषु ।
तदा संन्यासमिच्छन्ति पतितः स्याद्विपर्यये ।।८।।
प्राजापत्याग्निरूप्येष्टिमाग्नेयीमथवा पुनः ।
दान्तः पक्वकषायोऽसौ ब्रह्माश्रममुपाश्रयेत् ।।९।।"

[कू० पु० २/२८/३-४]

"ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा ।
क्रमेणैवाश्रमाः प्रोक्ता कारणादन्यथा भवेत् ।।१०।।
उत्पन्नज्ञानविज्ञानी वैराग्यं परमं गतः ।
प्रव्रजेद्ब्रह्मचर्यात्तु यदीच्छेत्परमां गतिम् ।।११।।"
दारानाहृत्य विधिवदन्यथा विविधैर्मखैः ।
यजेदुत्पादयेत्पुत्रान् विरक्तो यदि संन्यसेत् ।।१२।।
अनिष्ट्वा विधिवद्यज्ञैरनुत्पाद्य तथात्मजान् ।
न गार्हस्थ्यं गृही त्यक्त्वा संन्यसेद्बुद्धिमान् द्विजः ।।१३।।
अथ वैराग्यवेगेन स्थातुं नोत्सहते गृहे ।
तत्रैव संन्यसेद्विद्वाननिष्ट्वापि द्विजोत्तमः ।।१४।।
तथापि विविधैर्यज्ञैरिष्ट्वा वनमथाश्रयन् ।
तपस्तप्त्वा तपोयोगाद्विरक्तः संन्यसेद्बहिः ।।१५।।
वानप्रस्थाश्रमं गत्वा न गृहं प्रविशेत्पुनः ।
न संन्यासी वनञ्चाथ ब्रह्मचर्यञ्च साधकः ।। १६।।
प्राजापत्याग्निरूप्येष्टिमाग्नेयीमथवा द्विजः ।
प्रव्रजेत्तु गृही विद्वान् वनाद्वा श्रुतिचोदनात् ।।१७।।
प्रकर्त्तुमसमर्थोऽपि जुहोति यजति क्रियाः ।
अन्धः पङ्गुर्दरिद्रो वा विरक्तः संन्यसेद्द्विजः" ।।१८।।
सर्वेषामेव वैराग्यं संन्यासे तु विधीयते ।
पतत्येवाविरक्तो यः संन्यासं कर्तुमिच्छति ।।१९।।

[कू० पु० १/३/२-११]

"यदा मनसि वैराग्यं जातं सर्वेषु वस्तुषु ।
तदैव संन्यसेद्विप्रः पतितस्त्वन्यथा भवेत् ।।२०।।"

[वृ० ना० पु० १/२७/९१]

"अथ त्रिष्वाश्रमेषु पक्वकषायः प्राजापत्याग्निरूप्येष्टिं कृत्वा सर्वं वेदं दक्षिणां दत्त्वा प्रव्रज्याश्रमी स्यात् ।।२१।।" [बृहद्विष्णु०]

"ब्रह्मचारी गृहस्थो वा वानप्रस्थो मुनिस्तथा ।
विरक्तः सर्वकामेषु पारिव्राज्यं समाचरेत् ।।२२।।"
आत्मन्यग्नीन् समारोप्य दत्त्वा वाऽभयदक्षिणाम् ।
चतुर्थमाश्रमं गच्छेद्ब्राह्मणः प्रव्रजन्गृहात् ।।२३।।"

[विष्णु०४/१]

"अग्निं स्वात्मनि कृत्वा तु प्रव्रजेदुत्तरां दिशम् ।।२४।।"

[हारीत० ५/८]

"प्रव्रजेद्ब्रह्मचर्याद्वा प्रव्रजेच्च गृहादपि ।
वनाद्वा प्रव्रजेद्विद्वानातुरो वाथ दुःखिलः ।।२५।।"

*अथवा*

"सन्यसेद्ब्रह्मचर्येण संन्यसेद्वा गृहादपि ।
वनाद्वा संन्यसेद्विद्वानातुरो वाथ दुःखितः ।।२६।। [अंगिरा०]
"काषायं धारयित्वातु श्रेणिस्थानेषु च त्रिषु ।
यो व्रजेच्च परं स्थानं पारिव्राज्यमनुत्तमम् ।
तद्भावेन न संन्यस्य वर्तनं श्रूयतां तथा ।।२७।।"

[पद्म पु० १/१५/३६०]

"अग्नीनात्मनि संस्थाप्य द्विजः प्रव्रजितो भवेत् ।
योगाभ्यासरतः शान्तो ब्रह्मविद्यापरायणः ।।२८।।
यदा मनसि सम्पन्नं वैराग्यं सर्ववस्तुषु ।
तदा संन्यासमिच्छेच्च पतितः स्याद्विपर्यये ।।२९।।
प्राजापत्यां निरूप्येष्टिमाग्नेयीमथवा पुनः ।
दान्तः शुक्लकषायोऽसौ ब्रह्माश्रममुपाश्रयेत् ।।३०।।"

[पद्म पु० ३/५९/२-४]

"वनाद्गृहाद्वा कृत्वेष्टिं सर्ववेदसदक्षिणाम् ।
प्राजापत्यां तदन्ते तानग्नीनारोप्य चात्मनि ।।३१।।
अधीतवेदो जपकृत्पुत्रवानन्नदोऽग्निमान् ।
शक्त्या च यज्ञकृन्मोक्षे मनः कुर्यात्तु नान्यथा ।।३२।।"

[याज्ञ० ३/४/५३-५७]

"यदा कर्मविपाकेषु लोकेषु निरयात्मसु ।
विरागो जायते सम्यङ्न्यस्ताग्निः प्रव्रजेत्ततः ।।३३।।"
इष्ट्वा यथोपदेशं मां दत्त्वा सर्वस्वमृत्विजे ।
अग्नीन् स्वप्राण आवेश्य निरपेक्षः परिव्रजेत् ।।३४।।

[श्रीमद्भा० ११/१८/१२-१३]

"वनवासात्परिश्रान्तः प्रव्रजेद्विधिपूर्वकम् ।
व्याध्याविष्टो विरक्तो वा ब्रह्मवित्संन्यसेद्द्विजः ।।३५।।
यदा मनसि संजातं वैतृष्ण्यं सर्ववस्तुषु ।
तदा संन्यासमिच्छन्ति पतितः स्याद्विपर्ययात् ।।३६।।" [अंगिरा०]
"चीर्णविद्व्रतो विद्वान्ब्राह्मणो मोक्षमाश्रयेत् ।
समः सर्वेषु भूतेषु चरेषु स्थावरेषु च ।।३७।।
उत्पन्नज्ञानविज्ञानो वैराग्यं परमं गतः ।
प्रव्रजेद्ब्रह्मचर्यात्तु यदीच्छेत्परमां गतिम् ।।३८।।
जातपुत्रो गृहस्थो वा विदितात्मा जितेन्द्रियः ।।३९।।" [यम०]
"कषायं पाचयित्वा तु श्रेणिस्थानेषु च त्रिषु ।
प्रव्रजेत्तु परं स्थानं पारिव्राज्यमनुत्तमम् ।।४०।।" [मनु०]
"ब्रह्मचर्याद् गृहाद्वाऽपि वनाद्वा संन्यसेद्बुधः ।
पुत्रेषु भार्यां निक्षिप्य मृतपत्नीक एव वा ।।४१।।" [कात्या०]
"ब्रह्मचारी गृहस्थो वा वानप्रस्थोऽथवा पुनः ।
विरक्तः सर्वकामेभ्यः पारिव्राज्यं समाश्रयेत् ।।४२।। [व्यास०]
"यदा मनसि वैराग्यं जायते सर्ववस्तुषु ।
तदैव संन्यसेद्विद्वानन्यथा पतितो भवेत् ।।४३।।" [सौ०पु०]
"उत्पन्ने संकटे घोरे चौरव्याघ्रादिगोचरे ।
भयभीतस्य संन्यासमङ्गिरा मुनिरब्रवीत् ।।४४।।
विरक्तः संन्यसेद्विद्वाननिष्ट्वाऽपि द्विजोत्तमः ।
प्रकर्तुमप्यशक्तोऽपि जुहोति यजति क्रियाः ।।४५।।
अन्धः पङ्गुर्दरिद्रो वा विरक्तः संन्यसेद् द्विजः ।
सर्वेषामेव वैराग्यं संन्यासे तु विधीयते ।।४६।।

पतत्येवाविरक्तो यः संन्यासं कर्तुमिच्छति ।
पुनर्दारक्रियाभावान्मृतभार्यः परित्यजेत् ।।४७।।"

[अङ्गिरा० ]

"पारिव्राज्यं तु वैराग्यात्कर्तव्यं विधुरादिभिः ।
विधिना तच्च कुर्वीत संन्यासमिह बुद्धिमान् ।।४८।।"

[पाराशर०]

"भावितैः करणैश्चायं बहुसंसारयोनिषु ।
आसादयति शुद्धात्मा मोक्षं वै चतुराश्रमे ।।४९।।" [संवर्त०]
"प्रवृत्तिलक्षणो योगो ज्ञानं संन्यासलक्षणम् ।
तस्माज्ज्ञानं पुरस्कृत्य संन्यसेदिह बुद्धिमान् ।।५०।।" [व्यास०]
"दशलक्षणकं धर्ममनुतिष्ठन्समाहितः ।
वेदान्तान्विधिवच्छ्रुत्वा संन्यसेदनृणो द्विजः ।।५१।।" [मनु०]
"वनाद्गृहाद्वा कृत्वेष्टिं सर्ववेदसदक्षिणाम् ।
प्राजापत्यं तदन्तेऽपि अग्निमारोप्य चात्मनि ।।५२।। १/२
सर्वभूतहितः शान्तस्त्रिदण्डी सकमण्डलुः ।
सर्वारामं परिव्रज्य भिक्षार्थी ग्राममाश्रयेत् ।।५३।।"

[ग०पु० १/१०३/१-२ ]

"एवं वनाश्रमे तिष्ठन् पातयंश्चैव किल्विषम् ।
चतुर्थमाश्रमं गच्छेत् संन्यासविधिना द्विजः ।।५४।।"

[हारीत० ६/२]

"चतुर्थमाश्रमं गच्छेज्जितक्रोधो जितेन्द्रियः ।
अग्निमात्मनि संस्थाप्य द्विजः प्रव्रजितो भवेत् ।।५५।।"

[संवर्त० १०६]

"परिव्राजकः सर्वभूताभयदक्षिणां दत्त्वा प्रतिष्ठेत् ।।५६।।"

[वसिष्ठ० १०/१]

"परिव्राजकः परित्यज्य बन्धूनपरिग्रहः प्रव्रजेद्यथाविधि ।।५७।।"

[बौधायन०]

"तद् यथा विमुच्याग्निं धन-कलत्र-परिवर्हणं संगेष्वात्मनः
स्नेहपाशानवधूय परिव्रजन्ति ।।५८।।"
[महा० शा० १९२/३]

"ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् ।
अनपाकृत्य मोक्षन्तु सेवमानो व्रजत्यधः ।।५९।।
प्राजापत्यं निरूप्येष्टिं सर्ववेदसदक्षिणाम् ।
आत्मन्यग्नीन्समारोप्य ब्राह्मणः प्रव्रजेद् गृहात् ।।६०।।"

[मनु० ६/३५-३६]

"गृहस्थो ब्रह्मचारी वानप्रस्थो वा लौकिकाग्नीनुदराग्नौ समारोपयेत् । गायत्रीं च स्ववाचाग्नौ समारोपयेदुपवीतं भूमावप्सु वा विसृजेत् । कुटीचरो ब्रह्मचारी कुटुम्बं विसृजेत् । पात्रं विसृजेत् । पवित्रं विसृजेत् । दण्डांश्च लौकिकाग्नींश्च विसृजेत् । वेदार्थं यो विद्वान्सोपनयनादूर्ध्वमेतानि प्राग्वा त्यजेत् । पितरं पुत्रमग्न्युपवीतं कर्म कलत्रं चान्यदपि ।।६१।। [आरु० उ० २,५]

पुत्रदारगृहक्षेत्रगोहिरण्यादिबन्धनैः ।
विरक्तो मानुषैर्भोगैर्दिव्यैश्च स्मृतिदर्शितैः ।।६२।।
वेदाभ्यासेन यज्ञेन तपसा वीतकल्मषः ।
जन्मजन्मान्तराभ्यासाद्विशुद्धात्मा जितेन्द्रियः ।।६३।।
इतिहासपुराणाभ्यां स्मृत्या च प्रतिबोधितः ।
यतते परमं स्थानं यतनात्स यतिर्भवेत् ।
तस्येयं परमा सिद्धिर्यतेर्नान्यस्य कस्यचित् ।।६४।।

[मेधातिथि०]

"सोऽधीतवेदतत्त्वार्थो गृहवासमशक्नुवन् ।
प्रव्रजेदकृतोद्वाहो वनाच्चीर्णो गृहादपि ।।६५।। [लिखित०]
"असारमेव संसारं दृष्ट्वा सारदिदृक्षया ।
प्रव्रजेदकृतोद्वाहः परं वैराग्यमास्थितः ।।६६।।
अन्योऽप्युत्पन्नसन्तानमिष्ट्वा च विविधैर्मखैः ।
पतितार्धशरीरो वा वनादन्यः परिव्रजेत् ।।६७।। इति ।

[वृहस्पति०]

अर्धशरीरं भार्या । "पतत्यर्धं शरीरस्य भार्या यस्य सुरां पिबेत्"
इति दर्शनात् ।।

"एवं नीत्वा वने कालं द्विजो ब्रह्माश्रमी भवेत् ।
नानोपनिषदां ज्ञानात्प्राप्तवैराग्यपाटवः ।।६८।।

समाहितेन्द्रियग्रामो विषयेभ्यः सुदूरतः ।
आत्मैकरामो मनसा निरस्य परिपन्थिनः ।।६९।।
योगाभ्यासेन बहुशो लब्धात्माऽद्धबन्धनः ।
सर्वसङ्गनिवृत्तात्मा ब्रह्मचार्यपि सुव्रतः ।।७०।।
एतैर्गुणैरुपेतश्चेत् गृहस्थो वा प्रजायते ।
कृत्वेष्टिं विधिवद्दत्त्वा सर्ववेदसदक्षिणाम् ।।७१।।
आत्मन्यग्नीन्समारोप्य द्विजो ब्रह्माश्रमी भवेत् ।।७२।। [शंख०]
"जन्मकोटिशतारब्धपुण्याप्तं देवकारितम् ।
वैराग्यं जायते शीघ्रं तृष्णापि ब्रह्मणि स्थिरा ।।७३।।
योऽधीतवेदतत्त्वार्थो गृहवासमशक्नुवन् ।
प्रव्रजेद् ब्रह्मचर्याच्च गृहाच्चीर्णो वनादपि ।।७४।।
नीरुजश्च युवा चैव वसेद्गार्हस्थ्यमादृतः ।
अन्धः पङ्गुस्तथा कुष्ठी वृद्धो मौनं समाश्रयेत् ।।७५।।" [लिखित०]

[अन्ये चाहुः–उभयीषु श्रुतिस्मृतिषु विपरीतं किं न भवेत् ? अविरक्तः पारिव्राज्यं कर्तुमशक्नुवन् किं न गृही भवेत् ? न ह्यविरक्तः पारिव्राज्यं कर्तुं शक्नोति तथा च,]

"सत्त्वोत्कटाः सुरास्तेऽपि विषयैस्तु वशीकृताः।
किं पुनः क्षुद्रसत्त्वैस्तु मानवैरत्र का कथा ।।७६।।
तस्मात्पक्वकषायेण कर्तव्यं दण्डधारणम् ।
इतरस्तु न शक्नोति विषयैर्ह्रियते यतः ।।७७।।
त्रिदण्डलिङ्गमाश्रित्य जीवन्ति बहवो द्विजाः ।
यो हि ब्रह्म न जानाति त्रिदण्डार्हो न स स्मृतः ।।७८।। [दक्ष०]
"यः कृत्वा सर्वसंन्यासं प्रत्यापत्तिं भजेद्द्विजः ।
तं दण्डैर्योजयेद्राजा श्वपादेनाङ्कयेत्तथा ।।७९।।
तस्मादाशयशुद्धिं प्राग् बहुकालं परीक्ष्य च ।
मनो न चलते तस्मादिति ज्ञात्वाथ संन्यसेत् ।।८०।। [लिखित०]
"निवृत्तकर्मरागादेः प्रशान्तो ब्रह्मतत्परः ।
स संन्यासाधिकारी स्यादितरे जीविकापराः ।।८१।।" [यम०]
"गुरुशुश्रूषया विद्याः सम्प्राप्य विधिवद्द्विजः ।
स्नायीत गुर्वनुज्ञातो दत्त्वास्मै दक्षिणां हि गाम् ।।८२।।

नैष्ठिकं वा मुनिर्वापि पारिव्राजकमेव वा ।
यमिच्छेदाश्रमं विप्रो वसेत्तत्रैव संयतः ।।८३।। [व्यास०]

## पतितलक्षणम्

"संन्यासे निश्चयं कृत्वा पुनर्न च करोति यः ।
स कुर्यात्कृच्छ्रमात्रं तु पुनः संन्यस्तुमर्हति ।।
संन्यासं पातयेद्यस्तु पतितं न्यासयेत्तु यः ।
संन्यासविघ्नकर्ता च त्रीनेतान् पतितान्विदुः ।।" [सं० उ०२/१-२]
"संन्यासे निश्चयं कृत्वा पुनर्न च करोति यः ।
स कुर्यात्कृच्छ्रमश्रान्तं षण्मासात्प्रत्यनन्तरम् ।।
संन्यासं पातयेद्यस्तु पतितं न्यासयेत्तु यः ।
संन्यासविघ्नकर्ता च त्रीनेतान्पतितान्विदुः ।।" [जावाल०]

## आरूढपातित्ये प्रत्यवायः

अथ खलु सौम्येदं पारिव्राज्यं नैष्ठिकमात्मधर्मं यो विजहाति स वीरहा भवति । स ब्रह्महा भवति । स भ्रूणहा भवति । स महापातकी भवति। य इमां वैष्णवीं निष्ठां परित्यजति स स्तेनो भवति । स गुरुतल्पगो भवति । स मित्रध्रुग्भवति । स कृतघ्नो भवति । स सर्वस्माल्लोकात्प्रच्युतो भवति ।।१।।
तदेतद्वचाभ्युक्तम् –
"स्तेनो सुरापो गुरुतल्पगामी मित्रध्रुगेते निष्कृतेर्यान्ति शुद्धिम् ।
व्यक्तमव्यक्तं वा विधृतं विष्णुलिङ्गं त्यजन्न शुध्येदखिलैरात्मभासा।।२।।
त्यक्त्वा सर्वाश्रमान्धीरो वसेन्मोक्षाश्रमेऽचिरम् ।
मोक्षाश्रमात्परिभ्रष्टो न गतिस्तस्य विद्यते ।।३।।
पारिव्राज्यं गृहीत्वा तु यः स्वधर्मे न तिष्ठति ।
तमारूढच्युतं विद्यादिति वेदानुशासनम् ।।४।।"

[शाट्या० उ० २६-२९]

"सर्वसङ्गपरित्यागी मैथुने यः प्रवर्तते ।
स चाण्डालसमो ज्ञेयः सर्ववर्णबहिष्कृतः ।।५।।
सर्वसंगपरित्यागी पुनः संगी भवेद्यदि ।
तत्संगसंगिनां संगान्महापातकदोषभाक् ।।६।।"

[बृ० ना० पु० १/३३/८०,८२]

"युवा नीरुक् तथा भिक्षुरात्मवृद्धिप्रदूषकः ।
भिक्षुर्गेहि वसन्यत्र कामार्तोऽन्योऽभिगच्छति ।।
तत्सद्मनाथं वृद्धान्वै सह तेनैव पातयेत् ।।७।।

[बृहत्पारा० १२/१३९-१३९ १/२]

"यस्तु प्रव्रजितो भूत्वा पुनः सेवेत मैथुनम् ।
षष्टिवर्षसहस्राणि विष्ठायां जायते कृमिः ।।८।।
चाण्डाल्यां विशतो विप्राः पारिव्राजकतापसाः ।
तैर्जातानि ह्यपत्यानि चाण्डालैर्नरकं ययुः ।।९।।" [लघुशाता० ६०-६१]

"पारिव्राज्यं गृहीत्वा तु यः स्वधर्मे न तिष्ठति ।
श्वपदेनाङ्कयित्वा तं राजा शीघ्रं प्रवासयेत् ।।१०।।" [दक्ष० ७/३३]

"आरूढं नैष्ठिकं धर्मं यस्तु प्रच्यवते द्विजः ।
प्रायश्चित्तं न पश्यामि येन शुद्ध्यति कर्मणा ।।११।।
ये च प्रव्रजितापत्या या चैषा बीजसंततिः ।
विदूरा नाम चाण्डाला जायन्ते नात्र संशयः ।।१२।।"

[अत्रि० ८/ १६-१७]

"आरूढो नैष्ठिकं धर्मं पुनरावर्तयेद्यदि ।
आरूढपतितो ज्ञेयः सर्वधर्मबहिष्कृतः ।।१३।।
स निन्द्यः सर्वभूतानां पितृघ्नश्चैव जायते ।
चाण्डालाः प्रत्यवसिताः परिव्राजकतापसाः ।।१४।।
तेषां जातान्यपत्यानि चाण्डालैः सह वासयेत् ।
नैष्ठिकानां वनस्थानां यतीनामवकीर्णिनाम् ।।१५।।
शुद्धानामपि लोकेऽस्मिन्प्रत्यापत्तिर्न विद्यते ।।१६।। [विष्णु०]

"यतिश्च ब्रह्मचारी च उभौ भिक्षाशिनौ स्मृतौ ।
शाकमूलफलाशी स्याद्वनस्थः सततं द्विजः ।।१७।।

यस्त्वेकदण्डमालम्ब्य धर्मं ब्राह्मं परित्यजेत् ।
विकर्मस्थो भवेद्विप्रः स याति नरकं ध्रुवम् ।।१८।।"

[वृद्धहा० ८/५४,५६]

"ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा ।
उत्तमां वृत्तिमाश्रित्य पुनरावर्तयेद्यदि ।।१९।।
आरूढपतितो ज्ञेयः सर्वधर्मबहिष्कृतः ।
निन्द्यश्च सर्वदेवानां पितॄणां च तथोच्यते ।।२०।।
त्रिदण्डं लिङ्गमाश्रित्य जीवन्ति बहवो द्विजाः ।
न तेषामपवर्गोऽस्ति लिङ्गमात्रोपजीविनाम् ।।२१।।"

[विष्णु० ४/३२-३४]

"आरूढपतितो हन्ति दशपूर्वान्दशापरान् ।
निस्तारयति तानेव यो हि सम्यग्व्यवस्थितः ।।२२।।
संन्यासं चैव यः कृत्वा पुनरुत्तिष्ठते द्विजः ।
न तस्य निष्कृतिः कार्या स्वधर्मात्प्रच्युतस्य वै ।। २३।।"

[अंगिरा०]

"द्रव्यस्त्रीमांससंपर्कान्मधुमाक्षिकलेहनात् ।
विचारस्य परित्यागाद्यतिः पतनमृच्छति ।।२४।।
क्रोधलोभपरो नित्यं निद्रालस्यपरस्तथा ।
विषादीच्छापरश्चैव श्रेयसो भ्रश्यते द्विजः।।२५।।
आरूढपतितो हन्ति दशपूर्वान्दशापरान् ।
निस्तारयति तानेव यदि सम्यग्व्यवस्थितः ।।२६।।
"क्रमाद्वाऽक्रमतो विद्वानुत्तमां वृत्तिमाश्रयेत् ।
उत्तमां वृत्तिमापन्नो न नीचां वृत्तिमाश्रयेत् ।।२७।।
उत्तमां वृत्तिमाश्रित्य नीचां वृत्तिं समाश्रितः ।
आरूढपतितो ज्ञेयः सर्वधर्मबहिष्कृतः ।।२८।।"

[सू० सं० २/६/ ३१-३२]

"संन्यासी यो हि भूत्वा तु हिरण्यं संग्रहेद्यदि ।
तस्य दर्शनमात्रेण सचैलो जलमाविशेत् ।।२९।।

द्रव्यादानं यतिर्यो वै प्रकरोति नराधमः ।
पच्यते नरके घोरे यावदाभूतसम्प्लवम् ।।३०।।
अद्वैतभावमाश्रित्य द्वैताचारेण वर्तते ।
रुदन्ति पितरस्तस्य हा कष्टं पतितं पुनः ।।३१।। [वायु पु०]
"यः प्रव्रज्य गृहात् पूर्वं त्रिवर्गो वपनात्पुनः ।
यदि सेवेत तान् भिक्षुः स वै वान्ताश्यपत्रपः ।।३२।।
यैः स्वदेहः स्मृतोऽनात्मा मर्त्यो विट्कृमिभस्मसात् ।
त एनमात्मसात्कृत्वा श्लाघयन्ति ह्यसत्तमाः ।।३३।।
गृहस्थस्य क्रियात्यागो व्रतत्यागो वटोरपि ।
तपस्विनो ग्रामसेवा भिक्षोरिन्द्रियलोलता ।।३४।।
आश्रमापसदा ह्येते खल्वाश्रमविडम्बकाः ।
देवमायाविमूढांस्तानुपेक्षेतानुकम्पया ।।३५।।
आत्मानं चेद् विजानीयात् परं ज्ञानधुताशयः ।
किमिच्छन् कस्य वा हेतोर्देहं पुष्णाति लम्पटः ।।३६।।

[श्रीमद्भा० ११/१५/३६-४०]

"लोभाद्यदि यतिर्विप्र तनुपोषपरो भवेत् ।
स चाण्डालसमो ज्ञेयो वर्णाश्रमविगर्हितः ।।३७।।

[बृ० ना० पु० १/२७/९९]

"प्रमादिनो बहिश्चित्ताः पिशुनाः कलहोत्सुकाः ।
संन्यासिनोऽपि दृश्यन्ते देवसंदूषिताशयाः ।।३८।।"

[याज्ञ० उ० १/२]

"द्रव्यार्थमन्नवस्त्रार्थं यः प्रतिष्ठार्थमेव वा ।
संन्यसेदुभयभ्रष्टः स मुक्तिं नाप्तुमर्हति ।।३९।।"

[मैत्रा० उ० २/२०]

"सत्कारमानपूजार्थं दण्डकाषायधारकः ।
स संन्यासी न वक्तव्यः संन्यासी ज्ञानतत्परः ।।४०।।"
"तस्मात्त्यक्तकषायेण कर्तव्यं दण्डधारणम् ।
इतरस्तु न शक्नोति विषयैरपहीयते ।।४१।। [दक्ष०]

# संन्यासानधिकारी

"षण्डः पतितोऽङ्गविकलः स्त्रैणो बधिरोऽर्भको मूकः पाषण्डश्चक्री लिङ्गी वैखानसहरद्विजौ भृतकाध्यापकः शिपिविष्टोऽनग्निको वैराग्यवन्तोऽप्येते न संन्यासार्हाः संन्यस्ता यद्यपि महावाक्योपदेशे नाधिकारिणः ॥१॥

**"परेणैवात्मनश्चापि परस्यैवात्मना तथा ।**
**अभयं समवाप्नोति स परिव्राडिति स्मृतिः ।।२।।**
**षण्डोऽथ विकलोऽप्यन्धो बालकश्चापि पातकी ।**
**पतितश्च परद्वारी वैखानसहरद्विजौ ।।३।।**
**चक्री लिङ्गी च पाखण्डी शिपिविष्टोऽप्यनग्निकः ।**
**द्वित्रिवारेण संन्यस्तो भृतकाध्यापकोऽपि च ।**
**एते नार्हन्ति संन्यासमातुरेण विना क्रमम् ।।४।।"**

[ना० प० उ० ३/१-३]

"अथ षण्डः पतितोऽङ्गविकलः स्त्रैणो वधिरोऽर्भको मूकः पाषण्डश्चक्री लिङ्गी कुष्ठी वैखानसहरद्विजौ भृतकाध्यापकः शिपिविष्टोऽनग्निको नास्तिको वैराग्यवन्तोऽप्येते न संन्यासार्हाः । संन्यस्ता यद्यपि महावाक्योपदेशे नाधिकारिणः ॥५॥

**आरूढपतितापत्यः कुनखी श्यावदन्तकः ।**
**क्षीबस्तथाऽङ्गविकलो नैव संन्यस्तुमर्हति ।।६।।**
**संप्रत्यवसितानां च महापातकिनां तथा ।**
**व्रात्यानामभिशस्तानां संन्यासं नैव कारयेत् ।।७।।**
**व्रतयज्ञतपोदानहोमस्वाध्यायवर्जितम् ।**
**सत्यशौचपरिभ्रष्टं संन्यासं नैव कारयेत् ।।८।।**
**एते नार्हन्ति संन्यासमातुरेण विना क्रमम् ।।९।।**

[सं०उ० २/३-५½]

*

# आतुरसंन्यासः

आतुरकालः कथमार्यसंमतः –

“प्राणस्योत्क्रमणासन्नकालस्त्वातुरसंज्ञकः ।
नेतरस्त्वातुरः कालो मुक्तिमार्गप्रवर्तकः ।।१।।
आतुरेऽपि च संन्यासे तन्त्रमन्त्रपुरःसरम् ।
मन्त्रावृत्तिं च कृत्वैव संन्यसेद्विधिवद्बुधः ।।२।।
आतुरेऽपि क्रमे वापि प्रेषभेदो न कुत्रचित् ।
न मन्त्रं कर्मरहितं कर्म मन्त्रमपेक्षते ।।३।।
अकर्म मन्त्ररहितं नातो मन्त्रं परित्यजेत् ।
मन्त्रं विना कर्म कुर्याद्भस्मन्याहुतिवद्भवेत् ।।४।।
विध्युक्तकर्मसंक्षेपात्संन्यासस्त्वातुरः स्मृतः ।
तस्मादातुरसंन्यासे मन्त्रावृत्तिविधिर्मुने ।।५।।”

[ना० प० उ० ३/४-८]

“यद्यातुरः स्यान्मनसा वाचा वा संन्यसेत् ।।६।। [जा० उ०]

“आपत्संन्यासकार्ये तु नियमा निखिला अपि ।
निवर्तन्ते द्विजातीनां प्रेषमात्रेण केवलम् ।।७।।
स संन्यासो भवेदेव तच्चित्तस्य महात्मनः ।
संन्यासाद्ब्राह्मणं स्थानं सर्वशास्त्रेषु निश्चितम् ।।८।।
न संशयोऽत्र कर्तव्यः संशयी पापभाग्भवेत् ।।९।। [लौगाक्षि०]

“संन्यसेद्ब्रह्मचर्येण संन्यसेद्वा गृहादपि ।
वनाद्वा संन्यसेद्विद्वानातुरो वाऽथ दुःखितः ।।१०।।
आतुराणां विशेषोऽस्ति न विधिर्नैव च क्रिया ।
प्रैषमात्रस्तु संन्यास आतुराणां विधीयते ।।११।।” [अंगिरा०]

“आपत्काले तु संन्यासः कर्तव्य इति शिष्यते ।
जरयाऽभिपरीतेन शत्रुभिर्व्यथितेन च ।।१२।।
आतुराणां च संन्यासे न विधिर्नैव च क्रिया ।
प्रैषमात्रं समुच्चार्य संन्यासं तत्र कारयेत् ।।१३।।

संन्यस्तोऽहमिति ब्रूयात्सवनेषु त्रिषु क्रमात् ।
त्रिवारं तु त्रिलोकात्मा शुभाशुभविशुद्धये ।।१४।।
यत्किंचिद्बन्धकं कार्यं कृतमज्ञानतो मया ।
प्रमादालस्यदोषाद्यत्तत्सर्वं संत्यजाम्यहम् ।।१५।।
एवं संचिन्त्य भूतेभ्यो दद्यादभयदक्षिणाम् ।
पद्भ्यां कराभ्यां विहरन्नाहं वाक्कायमानसैः ।।१६।।
करिष्ये प्राणिनां हिंसां प्राणिनः सन्तु निर्भयाः ।।१७।।" [सुमन्तु०]

इत्यातुराणां संन्यासं संकल्प्य सावित्रीप्रवेशनपाणिहोमप्रैषोच्चारणाभयदानानि विहितानि ।।

व्याघ्राग्निदस्युसर्पाद्यैः सम्पन्नमरणस्तु यः ।
महता व्याधिना वारिपीडितो यो मुमूर्षति ।।१८।।
तदैव कुर्यात्संन्यासं विधिनाऽविधिनापि वा ।।१९।।
संन्यस्तमिति यो ब्रूयात् कण्ठस्थप्राणवानपि ।
तारिताः पितरस्तेन स्वयं मुक्तिपदे स्थितः ।।२०।।
मुक्तो यः प्राणसंदेहात्कृतसंन्यसनो द्विजः ।
पुनर्निवर्तते यश्च तेन संव्यवहारिणः ।
सर्वे ते कर्मचाण्डालास्तेषां दृष्ट्वा न निष्कृतिः ।।२१।।
संन्यस्य चापदं तीर्णाः सकाशे तु गुरोरथ ।
लब्ध्वा मन्त्रैस्त्रिदण्डादीन् गृहीत्वा योगमाचरेत् ।।२२।।
तेषां नाशे पुनः प्राप्ते गृहीत्वा मन्त्रवत्स्वयम् ।
समुद्रं गच्छ स्वाहेति नष्टानप्सु विनिक्षिपेत् ।
शिक्षयेद्यतिधर्मांश्च लिखितस्य वचो यथा ।।२३।।

[शंखलिखितौ]

## संन्यासस्वीकारप्रकारः

"ॐ भूः स्वाहेति शिखामुत्पाट्य यज्ञोपवीतं बहिर्न निनसेत् । यशो बलं ज्ञानं वैराग्यं मेधां प्रयच्छेति यज्ञोपवीतं छित्त्वा ॐ भूः स्वाहेत्यप्सु वस्त्रं कटिसूत्रं च विसृज्य संन्यस्तं मयेति त्रिवारमभिमन्त्रयेत्।।" [सं० उ०२/६]

"पुत्रान्भ्रातृन्बन्ध्वादीञ्छिखां यज्ञोपवीतं च यागं च सूत्रं च स्वाध्यायं

च भूर्लोकं-भुवर्लोकं-स्वर्लोकं-महर्लोकं जनलोकं तपोलोकं सत्यलोकं चातलपातालवितल-सुतलरसातल-तलातल-महातल-ब्रह्माण्डानि च विसर्जयेद्दण्डमाच्छादनं चैव कौपीनं च परिग्रहेत् । शेषं विसृजेदिति गृहस्थो ब्रह्मचारी वानप्रस्थो वा लौकिकाग्नीनुदराग्नौ समारोपयेत् । गायत्रीं च स्ववाचाग्नौ समारोपयेदुपवीतं भूमावप्सु वा विसृजेत् । दण्डांश्च लौकिकाग्नींश्च विसृजेदिति होवाच । अत ऊर्ध्वममन्त्रवदाचरेत्। ऊर्ध्वगमनं विसृजेत् । त्रिसंध्यादौ स्नानमाचरेत् । संधिं समाधानात्मन्याचरेत् । सर्वेषु वेदेष्वारण्यकमावर्तयेत् । उपनिषदमावर्तयेदुपनिषदमावर्तयेदिति।"

"खल्वहं ब्रह्मसूत्रं सूचनात्सूत्रं ब्रह्मसूत्रमहमेव विद्वांस्त्रिवृत्सूत्रं त्यजेद्विद्वान् य एवं वेद ।।" [आ रु०उ० २-३]

## संन्यासमन्त्रलिङ्गविध्यादि

"संन्यस्तं मया संन्यस्तं मया संन्यस्तं मयेति त्रिः कृत्वाऽभयं सर्वभूतेभ्यो मत्तः सर्वं प्रवर्तते । सखां मा गोपयौजः सखायोऽसीन्द्रस्य वज्रोऽसि वार्तध्नः शर्म मे भव यत्पापं तन्निवारयेति । अनेन मन्त्रेण कृतं वैणवदण्डं कौपीनं परिग्रहेत्। औषधवदशनमाचरेदौषधवदशनमाचरेत् । ब्रह्मचर्यमहिंसां चापरिग्रहं च सत्यं च यत्नेन हे रक्षतो हे रक्षतो हे रक्षत इति ।।

[आरु०उ० ३]

## देशान्तरस्थाहिताग्नेः संन्यासविधिः

"आहिताग्निर्विरक्तश्चेद्देशान्तरगतो यदि ।
प्राजापत्येष्टिमप्स्वेव निर्वृत्यैवाथ संन्यसेत् ।।
मनसा वाथ विध्युक्तमन्त्रावृत्त्याथ वा जले ।
श्रुत्यनुष्ठानमार्गेण कर्मानुष्ठानमेव वा ।।
समाप्य संन्यसेद्विद्वान्नो चेत्पातित्यमाप्नुयात् ।।"

[ना० प० उ० ३/९-११]

*

## सतृष्णस्य संन्यासपरिग्रहे नरकप्राप्तिः

"यदा मनसि संजातं वैतृष्ण्यं सर्ववस्तुषु ।
तदा संन्यासमिच्छेत पतितः स्याद्विपर्यये ।।
विरक्तः प्रव्रजेद्धीमान्सरक्तस्तु गृहे वसेत् ।
सरागो नरकं याति प्रव्रजन्हि द्विजाधमः ।।" [ना० प० उ० ३/१२-१३]
सर्वान्कामान्परित्यज्याद्वैतब्रह्मात्मचिन्तनम् ।
अयमेव परो दण्डः पञ्चमुद्रासमन्वितः ।।
ज्ञानदण्डो धृतो येन एक दण्डी स उच्यते ।
काष्ठदण्डो धृतो येन सर्वाशी ज्ञानवर्जितः ।।
स याति नरकान् घोरान् महारौरवमेव च ।
इति श्रुतिः स्वयं प्राह ज्ञानदण्डस्ततो मम ।।" [अद्वैता०]
"काष्ठदण्डो धृतो येन सर्वाशी ज्ञानवर्जितः ।
स याति नरकान् घोरान् महारौरवसंज्ञकान् ।।" [यम०]
"त्रिदण्डधारणं मौनं जटाधारणमुण्डनम् ।
वल्कलाजिनसर्वांशो व्रतचर्याभिषेचनम् ।।
अग्निहोत्रं वने वासः स्वाध्यायो ध्यानसंक्रिया ।
सर्वाण्येतानि वै मिथ्या यदि भावो न निर्मलः ।।" [वृद्धगौ०]
"सर्वान्कामान्परित्यज्य अद्वैते परमस्थितिः ।
ज्ञानदण्डो धृतो येन एकदण्डी स उच्यते ।।
काष्ठदण्डो धृतो येन सर्वाशी ज्ञानवर्जितः ।
(तितिक्षाज्ञानवैराग्यशमादिगुणवर्जितः ।
भिक्षामात्रेण यो जीवेत्स पापी यतिवृत्तिहा ।।)
स याति नरकान्घोरान्महारौरवसंज्ञकान् ।।" [परम० उ०]

## वैतृष्ण्यमेव संन्यासपरिग्रहहेतुः

"यस्यैतानि सुगुप्तानि जिह्वोपस्थोदरं करः ।
संन्यसेदकृतोद्वाहो ब्राह्मणो ब्रह्मचर्यवान् ।।

संसारमेव निःसारं दृष्ट्वा सारदिदृक्षया ।
प्रव्रजत्यकृतोद्वाहः परं वैराग्यमाश्रितः ।।
प्रवृत्तिलक्षणं कर्म ज्ञानं संन्यासलक्षणम् ।
तस्माज्ज्ञानं पुरस्कृत्य संन्यसेदिह बुद्धिमान् ।।"

[ना० प० उ० ३/१४-१६]

## मुख्यःसंन्यासः

"असंशयवतां मुक्तिः संशयाविष्टचेतसाम् ।
न मुक्तिर्जन्मजन्मान्ते तस्माद्विश्वासमाप्नुयात् ।।
कर्मत्यागान्न संन्यासो न प्रेषोच्चारणेन तु ।
संधौ जीवात्मनोरैक्यं संन्यासः परिकीर्तितः ।।"

[सं० उ० २/१६-१७]

देहाध्यासो हि संन्यासो नैव काषायवाससा ।
नाहं देहोऽहमात्मेति निश्चयो न्यासलक्षणम् ।।" [सदाचा०]

## विद्वत्संन्यासः

"यदा तु विदितं तत्त्वं परं ब्रह्म सनातनम् ।
तदैकदण्डं संगृह्य सोपवीतां शिखां त्यजेत् ।।१।।
परमात्मनि यो रक्तो विरक्तोऽपरमात्मनि ।
सर्वैषणाविनिर्मुक्तः स भैक्षं भोक्तुमर्हति ।।२।।
पूजितो वन्दितश्चैव सुप्रसन्नो यथा भवेत् ।
तथा चेत्ताड्यमानस्तु तदा भवति भैक्षभुक् ।।३।।
अहमेवाक्षरं ब्रह्म वासुदेवाख्यमद्वयम् ।
इति भावो ध्रुवो यस्य तदा भवति भैक्षभुक् ।।४।।
यस्मिन् शान्तिः शमः शौचं सत्यं संतोष आर्जवम् ।
अकिंचनमदम्भश्च स कैवल्याश्रमे वसेत् ।।५।।

यदा न कुरुते भावं सर्वभूतेषु पापकम् ।
कर्मणा मनसा वाचा तदा भवति भैक्षभुक् ।।६।।
दशलक्षणकं धर्ममनुतिष्ठन्समाहितः ।
वेदान्तान्विधिवच्छ्रुत्वा संन्यसेदनृणो द्विजः ।।७।।
धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः ।
धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम् ।।८।।
अतीतान्न स्मरेद्भोगान्न तथानागतानपि ।
प्राप्तांश्च नाभिनन्देद्यः स कैवल्याश्रमे वसेत् ।।९।।
अन्तःस्थानीन्द्रियाण्यन्तर्बहिष्ठान्विषयान्बहिः ।
शक्नोति यः सदा कर्तुं स कैवल्याश्रमे वसेत् ।।१०।। [बृहस्पति०]
प्राणे गते यथा देहः सुखं दुःखं न विन्दति ।
तथा चेत्प्राणयुक्तोऽपि स कैवल्याश्रमे वसेत् ।।११।।

[ना० प० उ० ३/१७–२७]

"यस्मिन्कामाः प्रविशन्ति विषयेभ्योपसंहृताः ।
विषयान्न पुनर्यान्ति स कैवल्याश्रमे वसेत् ।।१२।।
यस्मिन्क्रोधः शमं याति विफलः सम्यगुत्थितः ।
आकाशेऽग्निर्यथा क्षिप्तः स कैवल्याश्रमे वसेत् ।।१३।।
"श्रद्धा ध्यानं तपः शौचं यस्य वित्तं चतुष्टयम् ।
स्मरणं चाद्वितीयस्य स कैवल्याश्रमे वसेत् ।।१४।।
यस्मिञ्शान्तिः शमः शौचं सत्यं संतोष आर्जवम् ।
अकौटिल्यमदम्भित्वं स कैवल्याश्रमे वसेत् ।।१५।।"
"यस्मिन्वाचः प्रविशन्ति कूपे त्रस्ता द्विपा इव ।
न वक्तारं पुनर्यान्ति स कैवल्याश्रमे वसेत् ।।१६।।"

[महा० शा० २४५/८]

"यस्मिन्वाचः प्रविशन्ति कूपे प्राप्तामृता इव ।
न वक्तारं पुनर्यान्ति स कैवल्याश्रमे वसेत् ।।१७।।"

[पद्मपु० १/१५/३६४]

*

# संन्यासफलम्

"एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति ।।१।।"

[बृ० उ० ४/४/२२]

आत्मानमेव लोकमिच्छन्तः प्रव्रजेयुरित्यर्थः ।

"ब्रह्मसंस्थोऽमृतत्वमेति" ।।२।। [छा० उ० २/२३/२]

"त्याग एव सर्वेषां मोक्षसाधनमुत्तमम् ।
त्यजतैव हि तज्ज्ञेयः त्यक्तुं प्रत्यक्परं पदम् ।।" [भावा०उ०]

"न कर्मणा न प्रजया धनेन त्यागेनैकेऽमृतत्वमानशुः ।।४।।"

[कै०उ० ३]

"अथ परिव्राड् विवर्णवासा मुण्डोऽपरिग्रहः शुचिरद्रोही
भैक्षाणो ब्रह्मभूयाय कल्पते ।।५।।"

[जा०उ०५] [याज्ञ० उ० १]

"शतं कुलानां पुरतो बभूव तथाऽपराणां त्रिशतं समग्रम् ।
एते भवन्ति सुकृतस्य लोके येषां कुले संन्यसतीह विप्रः ।।६।।
संन्यासाद्ब्रह्मणः स्थानं वैराग्यात्प्रकृतौ लयः ।
ज्ञानात्कैवल्यमाप्नोति तिस्रस्ता गतयः स्मृताः ।।७।।
"अकार्यकारिणां दानं वेगो नद्याश्च शुद्धिकृत् ।
शोध्यस्य मृच्च तोयं च संन्यासोऽथ द्विजन्मनाम् ।।८।।"

[याज्ञ० ३/१/३२]

"एकरात्रोषितस्यापि यतेर्या गतिरुच्यते ।
न सा शक्या गृहस्थेन प्राप्तुं क्रतुशतैरपि ।।९।।
संन्यस्तमिति यो ब्रूयात्प्राणैः कण्ठगतैरपि ।
न तत्क्रतुशतेनापि प्राप्तुं शक्नोति मानवः ।।१०।।
संन्यस्तं तु द्विजं दृष्ट्वा स्थानाच्चलति भास्कर ः ।
एष मे मण्डलं भित्वा परं ब्रह्माधिगच्छति ।।११।।"

[विष्णु०]

"त्रिंशत्परांस्त्रिंशदपरांस्त्रिंशच्च परतः परान् ।
सद्यः संन्यसनादेव नरकात्तारयेत्पितॄन् ।।१२।।" [दक्ष०]

"चतुर्वेदस्तु यो विप्रः सोमयाजी शतक्रतुः ।
तस्मादपि यतिः श्रेष्ठस्तिलपर्वतमन्तरम् ।।१३।।" [जावाल०]
"संन्यस्तमिति यो ब्रूयात्प्राणैः कण्ठगतैरपि ।
सोऽक्षयाँल्लभते लोकान्पुनर्जन्म न विद्यते ।।१४।।" [कपिल०]
"षष्टिः कुलान्यतीतानि षष्टिरागामिकानि च ।
कुलान्युद्धरते प्राज्ञः संन्यस्तमिति यो वदेत् ।।१५।।
ये च संतानजा दोषा येऽपि स्युः कर्मसंभवाः ।
संन्यासस्तान्दहेद्दोषांस्तुषाग्निरिव काञ्चनम् ।।१६।।
सूर्यखद्योतयोर्यद्वन्मेरुसर्षपयोरिव ।
अन्तरं हि महद् दृष्टं तथा भिक्षुगृहस्थयोः ।।१७।। [अङ्गिरा०]
"यो दत्त्वा सर्वभूतेभ्यः प्रव्रजत्यभयं गृहात् ।
तस्य तेजोमया लोका भवन्ति ब्रह्मवेदिनः ।।१८।।
यस्मादण्वपि भूतानां द्विजान्नोत्पद्यते भयम् ।
तस्य देहाद्विमुक्तस्य भयं नास्ति कुतश्चन ।।१९।।"

[मनु० ६/३९-४०]

ब्रह्मवेदिनः सगुणब्रह्मविद इत्यर्थः । तेजोमयलोकसम्बन्धात् । कर्तृत्वादेरबाधितत्वाद्भयाशङ्काभावाच्च । न हि परब्रह्मविदस्तेजोमयलोकसंबन्धो भयाशङ्का वा स्यात् । ब्रह्मैव सन्ब्रह्माप्येति न बिभेति कुतश्चनेत्यादि श्रुतेः ।

"गृहस्थो ब्रह्मचारी च वानप्रस्थोऽथ भिक्षुकः ।
य इच्छेन्मोक्षमास्थातुमुत्तमां वृत्तिमाश्रयेत् ।।२०।।
ज्ञानेन मुच्यते भिक्षुस्तपसा स्वर्गमाप्नुयात् ।
नरकं विषयासङ्गात्त्रयो मार्गास्तपस्विनाम् ।।२१।।" [यम०]
"कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते ।
तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः ।।२२।।
यस्य संन्यसनादेव स्थानाच्चलति भास्करः ।
कुलकोटिशतैः सार्धं प्राप्नोति परमं पदम् ।।२३।।
षष्टिः कुलान्यतीतानि षष्टिरागामिकानि च ।
नरकादुद्धरत्येव संन्यस्तोऽहमिति ब्रुवन् ।।२४।।

दिव्यतेजोमयः श्रीमान्सूर्यचन्द्राग्निमण्डलम् ।
भित्त्वा प्रयाति संन्यासी स्वधर्मपरिपालनात् ।।२५।। [व्यास०]
संन्यस्तमिति यो ब्रूयात्कण्ठस्थप्राणवानपि ।
शतक्रतुसहस्रेण स तुल्यं फलमाप्नुयात् ।।२६।।[शातातप०]

## संन्यस्तपुरुषस्तवः

"अथ खलु सोम्येमं सनातनमात्मधर्मं वैष्णवीं निष्ठां लब्ध्वा यस्तामदूषयन्वर्तते स वशी भवति । स पुण्यश्लोको भवति । स लोकज्ञो भवति । स वेदान्तज्ञो भवति । स ब्रह्मज्ञो भवति । स सर्वज्ञो भवति । स स्वराड् भवति । स परंब्रह्मभगवन्तमाप्नोति । स पितॄन्संबन्धिनो बान्धवान्सुहृदो मित्राणि च भवादुत्तारयति ।"

तदेतच्चाभ्युक्तम्–

"शतं कुलानां प्रथमं बभूव तथापराणां त्रिशतं समग्रम् ।
एते भवन्ति सुकृतस्य लोके येषां कुले संन्यसतीह विद्वान् ।।१।।
त्रिंशत्परांस्त्रिंशदपरांस्त्रिंशच्च परतः परान् ।
उत्तारयति धर्मिष्ठः परिव्राडिति वै श्रुतिः ।।२।।
संन्यस्तमिति यो ब्रूयात्कण्ठस्थप्राणवानपि ।
तारिताः पितरस्तेन इति वेदानुशासनम् ।।३।।"

[शाट्या० उ० ३०-३२]

"संन्यासिनं द्विजं दृष्ट्वा स्थानाच्चलति भास्करः ।
एष मे मण्डलं भित्त्वा परं ब्रह्माधिगच्छति ।।४।।
षष्टिः कुलान्यतीतानि षष्टिरागामिकानि च ।
कुलान्युद्धरते प्राज्ञः संन्यस्तमिति यो वदेत् ।।५।।
ये च संतानजा दोषा ये दोषा देहसंभवाः ।
प्रैषाग्निर्निर्दहेत्सर्वांस्तुषाग्निरिव काञ्चनम् ।।६।।"

[सं० उ० २/६-८]

"द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ ।
परिव्राड्योगयुक्तश्च रणे चाभिमुखे हतः ।।७।।

संन्यस्तं ब्राह्मणं दृष्ट्वा स्थानाच्चलति भास्करः ।
एष मे मण्डलं भित्त्वा परं स्थानं च प्राप्स्यति ।।८।।"

[पाराशर० २/३२,३४]

"प्रव्रजन्तं द्विजं दृष्ट्वा स्थानाच्चलति भास्करः ।
एष मे मण्डलं भित्त्वा ब्रह्मलोकं गमिष्यति ।।९।।"

[सू०सं०२/६/३३]

"यस्याऽऽश्रमे यतिर्नित्यं वर्तते मुनिसत्तमः ।
न तस्य दुर्लभं किंचित्त्रिषु लोकेषु विद्यते ।।१०।।"

[सू०सं०२/६/३५]

## विविदिषोः श्रवणादिविधिः

विरज्य सर्वभूतेभ्य आविरिञ्चिपदादपि ।
घृणां विपाट्य सर्वस्मिन्पुत्रमित्रादिकेष्वपि ।।१।।
श्रद्धालुर्मुक्तिमार्गेषु वेदान्तज्ञानलिप्सया ।
उपायनकरो भूत्वा गुरुं ब्रह्मविदं व्रजेत् ।।२।।
सेवाभिः परितोष्यैनं चिरकालं समाहितः ।
सदा वेदान्तवाक्यार्थं शृणुयात्सुसमाहितः ।।३।।
निर्ममो निरहंकारः सर्वसङ्गविवर्जितः ।
सदा शान्त्यादियुक्तः सन्नात्मन्यात्मानमीक्षते ।।४।।
संसारदोषदृष्ट्यैव विरक्तिर्जायते सदा ।
विरक्तस्य तु संसारात्संन्यासः स्यान्न संशयः ।।५।।
मुमुक्षुः परहंसाख्यः साक्षान्मोक्षैकसाधनम् ।
अभ्यसेद्ब्रह्मविज्ञानं वेदान्तश्रवणादिना ।।६।।
ब्रह्मविज्ञानलाभाय परहंससमाह्वयः ।
शान्तिदान्त्यादिभिः सर्वैः साधनैः सहितो भवेत् ।।७।।
वेदान्ताभ्यासनिरतः शान्तो दान्तो जितेन्द्रियः ।
निर्भयो निर्ममो नित्यो निर्द्वन्द्वो निष्परिग्रहः ।।८।।

जीर्णकौपीनवासाः स्यान्मुण्डी नग्नोऽथ वा भवेत् ।
प्राज्ञो वेदान्तविद्योगी निर्ममो निरहंकृतिः ।।९।।
मित्रादिषु समो मैत्रः समस्तेष्वेव जन्तुषु ।
एको ज्ञानी प्रशान्तात्मा स संतरति नेतरः ।।१०।।
गुरूणां च हिते युक्तस्तत्र संवत्सरं वसेत् ।
नियमेष्वप्रमत्तस्तु यमेषु च सदा भवेत् ।।११।।
प्राप्य चान्ते ततश्चैव ज्ञानयोगमनुत्तमम् ।
अविरोधेन धर्मस्य संचरेत्पृथिवीमिमाम् ।।१२।।
ततः संवत्सरस्यान्ते ज्ञानयोगमनुत्तमम् ।
आश्रमत्रयमुत्सृज्य प्राप्तश्च परमाश्रमम् ।।१३।।
अनुज्ञाय गुरूंश्चैव चरेद्धि पृथिवीमिमाम् ।
त्यक्तसङ्गो जितक्रोधो लघ्वाहारो जितेन्द्रियः ।।१४।।
द्वाविमौ न विरज्येते विपरीतेन कर्मणा ।
निरारम्भो गृहस्थश्च कार्यवांश्चैव भिक्षुकः ।।१५।।

[ना० प० उ०६/१६-३०]

# यतेः जितेन्द्रियत्वम्

"कुटुम्बैः पञ्चभिर्ग्रामः षष्ठं तत्र महत्तमः ।
देवासुरमनुष्यैस्तु स जेतुं नैव शक्यते ।।१।।
बलेन परराष्ट्राणि गृह्णञ्शूरस्तु नोच्यते ।
जितो येनेन्द्रियग्रामः स शूरः कथ्यते बुधैः ।।२।।"

[दक्ष० ७/१७-१८]

"निगृहीतेन्द्रियग्रामो यत्र तत्र वसेन्नरः ।
तत्र तस्य कुरुक्षेत्रं नैमिषं पुष्कराणि च ।।३।। "

[वृद्धशाता० ६१]

"यत्र रागादिरहिता वासुदेवपरायणाः ।
तत्र संनिहितो विष्णुर्यतस्तीर्थमयो हि सः ।।४।।

किं तस्य बहुभिस्तीर्थैः स्नानहोमजपव्रतैः ।
येनेन्द्रियगणो घोरो निर्जितोऽन्यैर्दुरासदः ।।५।।
जितेन्द्रियः समः शान्तः सर्वभूतहिते रतः ।
वासुदेवपरो नित्यं न क्लेशं कर्तुमर्हति ।।६।।"
"यत्रास्तमितशायी स्यान्निरग्निरनिकेतनः ।
यथालब्धोपजीवी स्यान्मुनिर्दान्तो जितेन्द्रियः ।।७।।
निष्क्रम्य वनमास्थाय ज्ञानयज्ञो जितेन्द्रियः ।
कालाकाङ्क्षी चरन्नेव ब्रह्मभूयाय कल्पते ।।८।।"

[ना० प०उ०५/१४-१५]

"अरण्यनित्यस्य जितेन्द्रियस्य सर्वेन्द्रियप्रीतिनिवर्तकस्य ।
अध्यात्मचिन्तागतमानसस्य ध्रुवा ह्यनावृत्तिरुपेक्षकस्य ।।९।।"

[वसिष्ठ० १०/११]

अजिह्मोऽशरणोऽसंकुसको न चेन्द्रियसंयोगं कुर्वीत केनचित् ।।१०।।

[वसिष्ठ० १०/२१]

"जिह्वयातिप्रमाथिन्या जनो रसविमोहितः ।
मृत्युमृच्छत्यसद्बुद्धिर्मीनस्तु वडिशैर्यथा ।।११।।
इन्द्रियाणि जयन्त्याशु निराहारा मनीषिणः ।
वर्जयित्वा तु रसनं तन्निरन्नस्य वर्धते ।।१२।।
तावज्जितेन्द्रियो न स्याद् विजितान्येन्द्रियःपुमान् ।
न जयेद् रसनं यावज्जितं सर्वं जिते रसे ।।१३।।"

[श्रीमद्भा० ११/८/१९-२१]

"विषयासक्तचित्तो हि कश्चिद्योगं न विन्दति ।
यत्नेन विषयासङ्गं तस्माद्योगी विवर्जयेत् ।।१४।।"[दक्ष०७/१२]
"इन्द्रियाणां प्रसङ्गेन दोषमृच्छत्यसंशयः ।
संनियम्य तु तान्येव ततः सिद्धिं निगच्छति ।।१५।।
न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ।।१६।।
श्रुत्वा स्पृष्ट्वा च भुक्त्वा च दृष्ट्वा घ्रात्वा च यो नरः ।
न हृष्यति ग्लायति वा स विज्ञेयो जितेन्द्रियः ।।१७।।"

[ना०प०उ०३/३६-३८]

इन्द्रियाणां निरोधेन रागद्वेषक्षयेण च ।
अहिंसया च भूतानाममृतत्वाय कल्पते ।।१८।।"

[ना०प०उ० ३/४५]

इन्द्रियाणां तु सर्वेषां यद्येकं क्षरतीन्द्रियम् ।
तेनास्य क्षरति प्रज्ञा दृतेः पात्रादिवोदकम् ।।१९।।

[मनु० २/ ९९]

"अल्पान्नाभ्यवहारेण रहःस्थानासनेन च ।
ह्रियमाणानि विषयैरिन्द्रियाणि निवर्तयेत् ।।२०।।"

[मनु० ६/५९]

" प्रसार्येह यथाङ्गानि कूर्मः संहरते पुनः ।
तथेन्द्रियाणि मनसा संयतव्यानि भिक्षुणा ।।२१।।"

[महा० शा० ३२६/३९]

"इन्द्रियाणीन्द्रियार्थेभ्यः प्रत्याहृत्य मनश्चलम् ।
प्रत्यगात्मनि संस्थाप्य ध्यानं कुर्याद्यतिः सदा ।।२२।।
"एतावतैव पर्याप्तं भिक्षोरेकान्तशीलिनः ।
न तस्य म्रियते कश्चिन्म्रियते स न कस्यचित् ।।२३।।"
"अल्पाहारो रहःस्थायी त्विन्द्रियार्थेष्वलोलुपः ।
रागद्वेषविनिर्मुक्तो भिक्षुर्मोक्षाय कल्पते ।।२४।।"

[स्क० पु० का० ख० ४१/२९]

"त्यक्त्वेन्द्रियसुखं लोके यस्तिष्ठेद्यत्र कुत्रचित् ।
स एव योगी मुक्तः स्यात्सर्वसङ्गविवर्जितः ।।२५।।

[लघ्वा० १/१८८]

अन्वीक्षेतात्मनो बन्धं मोक्षं च ज्ञाननिष्ठया ।
बन्ध इन्द्रियविक्षेपो मोक्ष एषां च संक्षयः ।।२६।।
तस्मान्नियम्य षड्वर्गं मद्भावेन चरेन्मुनिः ।
विरक्तः क्षुल्लकामेभ्यो लब्ध्वाऽऽत्मनि सुखं महत् ।।२७।।"

[श्रीमद्भा० ११/१८/२२-२३]

"अशिल्पजीवी विगृहश्च नित्यं जितेन्द्रियः सर्वतो विप्रमुक्तः ।
अनोकशायी लघुलिप्समानश्चरन्देशानेकाम्बरः स भिक्षुः ।।२८।।"

[म० पु०४०/५]

"अवस्थितो ध्यानरतिर्जितेन्द्रियः शुभाशुभे हित्य च कर्मणी उभे ।
इदं शरीरं प्रविमुच्य शाश्वतो न जायते म्रियते वा कदाचित् ।।२९।।"

[वायु० पु० ११/७]

चिह्नानि धात्रा कथितानि धत्ते वर्तेत यो वै विहितेन भिक्षुः ।
योऽध्यात्मवेदी सततं जिताक्षः स ब्रह्मकाये गमनं करोति ।।३०।।

[वृहत्पारा० १२/१४३]

"संनिरुध्येन्द्रियग्रामं रागद्वेषौ प्रहाय च ।
भयं हित्वा च भूतानाममृती भवति द्विजः ।।३१।।"

[याज्ञ० ३/४/६१]

अपापमशठं वृत्तमजिह्मं नित्यमाचरेत् ।
इन्द्रियाण्युपसंहृत्य कूर्मोऽङ्गानीव सर्वशः ।।३२।।
क्षीणेन्द्रियमनोबुद्धिर्निरीक्षेत निरिन्द्रियः।
निर्द्वन्द्वो निर्नमस्कारो निःस्वधाकार एव च ।।३३।।
निर्ममो निरहंकारो निरपेक्षो निराशिषः ।
निराशः सर्वभूतेषु निराशीर्निष्परिग्रहः ।
सर्वज्ञः सर्वतो मुक्तो मुच्यते नात्र संशयः ।।३४।।

*

# त्रिदण्डी

अथ त्रिदण्डिनः –

"सत्त्वोत्कटाः सुराः सर्वे विषयैश्च वशीकृताः ।
प्रमादिनि क्षुद्रसत्त्वे मनुष्ये चात्र का कथा ।।१।।
तस्मात्त्यक्तकषायेण कर्तव्यं दण्डधारणम् ।
इतरस्तु न शक्नोति विषयैरभिभूयते ।।२।।
वैणवेन त्रिदण्डेन न त्रिदण्डीति कथ्यते ।
अध्यात्मदण्डयुक्तो यः स त्रिदण्डीति कथ्यते ।।३।।
वाग्दण्डोऽथ मनोदण्डः कर्मदण्डश्च ते त्रयः ।
यस्यैते तु त्रयो दण्डाः स त्रिदण्डीति कथ्यते ।।४।।"

[दक्ष०७/२७-३०]

"वागादिदण्डयुक्तस्तु प्रत्यगात्मन्यवस्थितः ।
परब्रह्मणि लीनो यः स त्रिदण्डी व्यवस्थितः ।।५।।
वाग्दण्डे मौनमातिष्ठेत् कर्मदण्डेऽल्पभोजनम् ।
मानसे तु कृते दण्डे प्राणायामो विधीयते ।।६।।" [दक्ष०]
"वाग्दण्डः कर्मदण्डश्च मनोदण्डश्च ते त्रयः ।
यस्यैते नियता दण्डाः स त्रिदण्डी महायतिः।।७।।"

[मा० पु० ४१/२२]

"मौनानीहानिलायामा दण्डा वाग्देहचेतसाम् ।
न ह्येते यस्य सन्त्यङ्ग वेणुभिर्न भवेद् यतिः ।।८।।"

[श्रीमद्भा० ११/१८/१७]

"यस्त्वसंयतषड्वर्गः प्रचण्डेन्द्रियसारथिः ।
ज्ञानवैराग्यरहितस्त्रिदण्डमुपजीवति ।।९।।
सुरानात्मानमात्मस्थं निह्नुते मां च धर्महा ।
अविपक्वकषायोऽस्मादमुष्माच्च विहीयते ।।१०।।"

[श्रीमद्भा० ११/१८/४०-४१]

"वाङ्मनःकायदण्डाश्च तथा सत्त्वादयो गुणाः ।
त्रयोऽपि नियता यस्य स त्रिदण्डीति कथ्यते ।।११।।"

[बृहत्पारा०धर्म०१०/३१-३१½]

"त्रिदण्डव्यपदेशेन जीवन्ति बहवो जनाः ।
यो हि ब्रह्म न जानाति त्रिदण्डार्हो भवेन्न सः ।।१२ ।।"

[दक्ष० ७/३१]

## परिव्राजकानां धर्माः

"अहिंसा सत्यमस्तेयब्रह्मचर्यापरिग्रहः ।
अनौद्धत्वमदीनत्वं प्रसादः स्थैर्यमार्जवम् ।।१।।
अस्नेहो गुरुशुश्रूषा श्रद्धा क्षान्तिर्दमः शमः ।
उपेक्षा धैर्यमाधुर्ये तितिक्षा करुणा तथा ।।२।।
ह्रीस्तथा ज्ञानविज्ञाने योगो लघ्वशनं धृतिः ।
एष स्वधर्मो विख्यातो यतीनां नियतात्मनाम् ।।३।।

[ना० प०उ०४/१०-१२½]

कामःक्रोधस्तथा दर्पो लोभमोहादयश्च ये ।
तांस्तु दोषान्परित्यज्य परिव्राण्निर्ममो भवेत् ।।४।।
रागद्वेषवियुक्तात्मा समलोष्टाश्मकाञ्चनः ।
प्राणिहिंसानिवृत्तश्च मुनिः स्यात्सर्वनिःस्पृहः ।।५।।
दम्भाहंकारनिर्मुक्तो हिंसापैशुन्यवर्जितः ।
आत्मज्ञानगुणोपेतो यतिर्मोक्षमवाप्नुयात् ।।६।।

[ना०प०उ० ३/३३-३५]

यस्य वाङ्मनसी शुद्धे सम्यग्गुप्ते च सर्वदा ।
स वै सर्वमवाप्नोति वेदान्तोपगतं फलम् ।।७।।
संमानाद्ब्राह्मणो नित्यमुद्विजेत विषादिव ।
अमृतस्येव चाकाङ्क्षेदवमानस्य सर्वदा ।।८।।
अतिवादांस्तितिक्षेत नावमन्येत कंचन ।
न चेमं देहमाश्रित्य वैरं कुर्वीत केनचित् ।।९।।
क्रुध्यन्तं न प्रतिक्रुध्येदाक्रुष्टः कुशलं व्रजेत् ।
सप्तद्वारावकीर्णां च न वाचमनृतां वदेत् ।।१०।।
अध्यात्मरतिरासीनो निरपेक्षो निराशिषः ।
आत्मनैव सहायेन सुखार्थी विचरेदिह ।।११।।

[ना०प०उ० ३/३९-४५]

मौनं योगासनं योगस्तितिक्षैकान्तशीलता ।
निःस्पृहत्वं समत्वं च सप्तैतान्येकदण्डिनाम् ।।१२।।

[ना०प०उ० ४/२४]

सर्वारम्भपरित्यागी भैक्षान्नं वृक्षमूलता ।
निष्परिग्रहता द्रोहः समता सर्वजन्तुषु ।।१३।।
प्रियाप्रियपरिष्वङ्गः सुखदुःखाविकारिता ।
सबाह्याभ्यन्तरं शौचं नियमो व्रतकारिता ।।१४।।
सर्वेन्द्रियसमाहारो धारणाध्याननित्यता ।
भावशुद्धिस्तथेत्येवं परिव्राड्धर्म उच्यते ।।१५।।

[पुलस्त्य० १९-२१]

सदन्ने वा कदन्ने वा लोष्टे वा काञ्चने तथा ।
समबुद्धिर्यस्य शश्वत्स संन्यासीति कीर्त्तितः ।।१६।।
दण्डं कमण्डलुं रक्तवस्त्रमात्रञ्च धारयेत् ।
नित्यं प्रवासी नैकत्र स्यात्संन्यासीति कीर्त्तितः ।।१७।।
शुद्धाचारो द्विजान्नञ्च भुङ्क्ते लोभादिवर्जितः ।
किन्तु किंचिन्न याचेत स संन्यासीति कीर्त्तितः ।।१८।।
न व्यापारी नाश्रमी च सर्वकर्मविवर्जितः ।
ध्यायेन्नारायणं शश्वत्स संन्यासीति कीर्त्तितः ।।१९।।
शश्वन्मौनी ब्रह्मचारी संभाषापरिवर्जितः ।
सर्वं ब्रह्ममयं पश्येत्स संन्यासीति कीर्त्तितः ।।२०।।
सर्वत्र समबुद्धिश्च हिंसामायाविवर्जितः ।
क्रोधाहंकाररहितः स संन्यासीति कीर्त्तितः ।।२१।।
अयाचितोपस्थितं च मिष्टामिष्टं च भुक्तवान् ।
न याचते भक्षणार्थी स संन्यासीति कीर्त्तितः ।।२२।।
न च पश्येन्मुखं स्त्रीणां न तिष्ठेत्तत्समीपतः ।
दारवीमपि योषां च न स्पृशेद्यः स भिक्षुकः ।।२३।।
अयं संन्यासिनां धर्म इत्याह कमलोद्भवः ।।२४।।
विपर्यये विनाशञ्च जन्म याम्यं भयं भवेत् ।
जन्मदुःखं याम्यदुःखं जीविनामतिदारुणम् ।।२५।।

सुरसूकरयोनौ वा गर्भे दुःखं समं सुराः ।
योनौ वा क्षुद्रजन्तूनां पश्वादीनां तथैव च ।।२६।।

[ब्र०वै०पु०२/३६/११८-१२८]

ज्ञानसंन्यासिनः केचिद्वेदसंन्यासिनः परे ।
कर्मसंन्यासिनस्त्वन्ये त्रिविधाः परिकीर्तिताः ।।२७।।
यः सर्वसङ्गनिर्मुक्तो निर्द्वन्द्वश्चैव निर्भयः ।
प्रोच्यते ज्ञानसंन्यासी स्वात्मन्येव व्यवस्थितः ।।२८।।
वेदमेवाभ्यसेन्नित्यन्निर्द्वन्द्वो निष्परिग्रहः ।
प्रोच्यते वेदसंन्यासी मुमुक्षुर्विजितेन्द्रियः ।।२९।।
यस्त्वग्नीनात्मसात्कृत्वा ब्रह्मार्पणपरो द्विजः ।
स ज्ञेयः कर्मसंन्यासी महायज्ञपरायणः ।।३०।।
त्रयाणामपि चैतेषां ज्ञानी त्वभ्यधिको मतः ।
न तस्य विद्यते कार्यं न लिङ्गं वा विपश्चितः ।।३१।।
निर्ममो निर्भयः शान्तो निर्द्वन्द्वो निष्परिग्रहः ।
जीर्णकौपीनवासाः स्यान्नग्नो वा ध्यानतत्परः ।।३२।।
ब्रह्मचारी मितग्रासी ग्रामात्त्वन्नं समाहरेत् ।
अध्यात्मरतिरासीत निरपेक्षो निराशिषः ।।३३।।
आत्मनैव सहायेन सुखार्थी विचरेदिह ।
नाभिनन्देत मरणं नाभिनन्देत जीवितम् ।।३४।।
कालमेव प्रतीक्षेत निर्देशं भृतको यथा ।
नाध्येतव्यं न वक्तव्यं श्रोतव्यं न कदाचन ।।३५।।
एवं ज्ञानपरो योगी ब्रह्मभूयाय कल्पते ।
एकवासाथवा विद्वान् कौपीनाच्छादनस्तथा ।।३६।।
मुण्डी शिखी वाथ भवेत्त्रिदण्डी निष्परिग्रहः ।
काषायवासाः सततं ध्यानयोगपरायणः ।।३७।।

[कू०पु०२/२८/५-१५]

प्राग्रात्रे पररात्रे च मध्यरात्रे तथैव च ।
सन्ध्यास्वग्निविशेषेण चिन्तयेन्नित्यमीश्वरम् ।।३८।।

[कू०पु०१/२/४४-४४ ]

मन्यन्ते ये स्वमात्मानं विभिन्नं परमेश्वरात् ।
न ते पश्यन्ति तं देवं वृथा तेषां परिश्रमः ।।३९।।

[कू०पु० १/२/८३-८३ 1/2]

भिक्षोर्व्रतानि पञ्चात्र पञ्चैवोपव्रतानि च ।
आचारशुद्धिर्नियमः शौचं च प्रतिकर्म च ।
सम्यग्दर्शनमित्येवं पञ्चैवोपव्रतान्यपि ।।४०।।
ध्यानं समाधिर्मनसेन्द्रियाणां ससागरैर्भैक्षमथोपगम्य ।
मौनं पवित्रोपचितैर्विमुक्तिः परिव्रजो धर्ममिमं वदन्ति ।।४१।।

[वायु पु० ८/१७८-१७९]

अस्तेयं ब्रह्मचर्यं च अलोभस्त्याग एव च ।
व्रतानि चैव भिक्षूणामहिंसा परमार्थता ।।४२।।
अक्रोधो गुरुशुश्रूषा शौचमाहारलाघवम् ।
नित्यं स्वाध्याय इत्येते नियमाः परिकीर्तिताः ।।४३।।

[वायु पु० १६/१७-१८]

त्यक्तसङ्गो जितक्रोधो लघ्वाहारो जितेन्द्रियः ।
पिधाय बुद्ध्या द्वाराणि ध्याने ह्येवं मनो दधेत् ।।४४।।
शून्येष्वेवावकाशेषु गुहासु च वने तथा ।
नदीनां पुलिने चैव नित्यं युक्तः सदा भवेत् ।।४५।।

[वायु पु० १७/४-५]

दमः शमः सत्यमकल्मषत्वं मौनं च भूतेष्वखिलेष्वथाऽऽर्जवम् ।
अतीन्द्रियज्ञानमिदं तथाऽऽर्जवं प्राहुस्तथा ज्ञानविशुद्धसत्त्वाः ।।४६।।
समाहितो ब्रह्मपरोऽप्रमादी शुचिस्तथैवाऽऽत्मरतिर्जितेन्द्रियः ।
समाप्नुयुर्योगमिमं महाधियो महर्षयश्चैवमनिन्दितामलाः ।।४७।।

[वायुपु० १६/२३-२४]

विपन्नमुसले भैक्ष्यमस्तेयं शौचमेव च ।
अप्रमादोऽव्यवायश्च दया भूतेषु च क्षमा ।।४८।।
श्रवणं गुरुशुश्रूषा सत्यं च दशमं स्मृतम् ।
दशलक्षणको ह्येष धर्मः प्रोक्तः स्वयंभुवा ।।४९।।

[ब्रह्मा०पु० २/७/१७७-१७८]

"वेदान्ताभ्यासनिरतः शान्तो दान्तो जितेन्द्रियः ।।५०।।
निर्द्वन्द्वो निरहंकारो निर्ममः सर्वदा भवेत् ।
शमादिगुणसंयुक्तः कामक्रोधविवर्जितः ।।५१।।
नग्नो वा जीर्णकौपीनो भवेन्मुण्डो यतिर्द्विजः ।
समः शत्रौ च मित्रे च तथा मानापमानयोः।।५२।।

[वृ०ना०पु० १/२७/९२-९४]

सम्मानेन परां हानिं योगर्द्धेः कुरुते यतः ।
जनेनावमतो योगी योगसिद्धिं च विन्दति ।।५३।।
तस्माच्चरेत वै योगी सदा धर्ममदूषयन् ।
जना यथावमन्येरन्नाच्छेयुर्नैव संगितम् ।।५४।।

[वृ०ना०पु० १/४६/३७-३८½]

"कामः क्रोधस्तथा दर्पलोभमोहादयश्च ये ।
तांस्तु दोषान्परित्यज्य परिव्राड् निर्ममो भवेत् ।।५५।।
अतिपूजितलाभांस्तु जुगुप्संश्चैव सर्वतः ।
अतिपूजितलाभैस्तु यतिर्मुक्तोऽपि बध्यते ।।५६।।
अभयं सर्वसत्त्वेभ्यो दत्त्वा यश्चरते महीम् ।
तस्य देहाद्विमुक्तस्य भयं नोत्पद्यते क्वचित् ।।५७।।

[ब्र०पु०२२२/५२-५४]

अहिंसा सत्यमस्तेयं ब्रह्मचर्यमफल्गुता ।
दया च सर्वभूतेषु नित्यमेतद्यतिश्चरेत् ।।५८।। [विष्णु०४/४]
"अरण्यं गत्वा शिखामुण्डः कौपीनाच्छादनः ।।५९।।

[बौधायन०२/६/२२]

एकदण्डी त्रिदण्डी वा ।
अथेमानि व्रतानि भवन्ति । अहिंसा सत्यमस्तैन्यं मैथुनस्य च वर्जनम् त्याग इत्येव ।
पञ्चैवोपव्रतानि भवन्ति । अक्रोधो गुरुशुश्रूषाऽप्रमादः शौचमाहारशुद्धिश्चेति ।।६०।। [बौधायन० २/१०/५३-५६]

उत्तरेषां चैतदविरोधी अनिचयो भिक्षुरूर्ध्वरेता ध्रुवशीलो वर्षासु भिक्षार्थी ग्राममियात् । जघन्यमनिवृत्तं चरेत् । निवृत्ताशीर्वाक्चक्षुकर्मसंयतः कौपीनाच्छादनार्थं

वासो विभृयात् प्रहीणमेकं निर्णेजनापिप्रयुक्तमौषधीवनस्पतीनामंगमुपाददीत न द्वितीयामपहर्तुं रात्रिं ग्रामे वसेत् । मुण्डः शिखी वा वर्ज्जयेज्जीववधसमीभूतेषु हिंसानुग्रहयोरनारंभे ।।६१।। [गौतम०]

अनग्निरनिकेतः स्याद् ग्राममन्नार्थमाश्रयेत् ।
उपेक्षकोऽसंकुसुको मुनिर्भावसमाहितः ।।६२।।
कपालं वृक्षमूलानि कुचैलमसहायता ।
समता चैव सर्वस्मिन्नेतन्मुक्तस्य लक्षणम् ।।६३।।
नाभिनन्देत मरणं नाभिनन्देत जीवितम् ।
कालमेव प्रतीक्षेत निर्देशं भृतको यथा ।।६४।।
अतिवादांस्तितिक्षेत नावमन्येत कंचन ।
न चेमं देहमाश्रित्य वैरं कुर्वीत केनचित् ।।६५।।
क्रुध्यन्तं न प्रतिक्रुध्येदाक्रुष्टः कुशलं वदेत् ।
सप्तद्वारावकीर्णां च न वाचमनृतां वदेत् ।।६६।।
अध्यात्मरतिरासीनो निरपेक्षो निराशिषः ।
आत्मनैव सहायेन सुखार्थी विचरेदिह ।।६७।। [मनु०६/४३-४९]
दूषितोऽपि चरेद्धर्मं यत्र तत्राश्रमे रतः ।
समः सर्वेषु भूतेषु न लिङ्गं धर्मकारणम् ।।६८।। [मनु०६/६६]
सम्यग्दर्शनसम्पन्नः कर्मभिर्न निबध्यते ।
दर्शनेन विहीनस्तु संसारं प्रतिपद्यते ।।६९।। [मनु०६/७४]
वेदांश्च वेद्यं तु विधिं च कृत्स्नमथो निरुक्तं परमार्थतां च ।
सर्वं शरीरात्मनि यः प्रवेद तस्यैव देवाः स्पृहयन्ति नित्यम् ।।७०।।
[महा० शा०२४५/३०]
अरोषमोहः समलोष्टाकाञ्चनः प्रहीणकोशो गतसंधिविग्रहः ।
अपेतनिन्दास्तुतिप्रियाप्रियश्चरन्नुदासीनवदेष भिक्षुकः ।।७१।।
[महा०शा०२४५/३६]
न चक्षुषा न मनसा न वाचा दूषयेदपि ।
न प्रत्यक्षं परोक्षं वा दूषणं व्याहरेत् क्वचित् ।।७२।।
न हिंस्यात् सर्वभूतानि मैत्रायणगतश्चरेत् ।
नेदं जीवितमासाद्य वैरं कुर्वीत केनचित् ।।७३।।

अतिवादांस्तितिक्षेत नावमन्येत कंचन ।
क्रोध्यमानः प्रियं ब्रूयादाक्रुष्टः कुशलं वदेत् ।।७४।।
प्रदक्षिणं च सव्यं च ग्राममध्ये च नाचरेत् ।
भैक्षचर्यामनापन्नो न गच्छेत् पूर्वकोटितः ।।७५।।
अवकीर्णः सुगुप्तश्च न वाचा ह्यप्रियं वदेत् ।
मृदुः स्यादप्रतिक्रूरो विस्रब्धः स्यादकत्थनः ।।७६।। [महा० शा० २७८/४-८]
प्राणयात्रिकमात्रः स्यान्मात्रालाभेष्वनादृतः ।
अलाभेन विहन्येत लाभश्चैनं न हर्षयेत् ।।७७।।
लाभं साधारणं नेच्छेन्न भुञ्जीताभिपूजितः ।
अभिपूजितलाभं हि जुगुप्सेतैव तादृशः ।।७८।।
न चान्नदोषान् निन्देत न गुणानभिपूजयेत् ।
शय्यासने विविक्ते च नित्यमेवाभिपूजयेत् ।।७९।।
शून्यागारं वृक्षमूलमरण्यमथवा गुहाम् ।
अज्ञातचर्यां गत्वान्यां ततोऽन्यत्रैव संविशेत् ।।८०।।
अनुरोधविरोधाभ्यां समः स्यादचलो ध्रुवः ।
सुकृतं दुष्कृतं चोभे नानुरुध्येत कर्मणा ।।८१।।
नित्यं तृप्तः सुसंतुष्टः प्रसन्नवदनेन्द्रियः ।
विभीर्जप्यपरो मौनी वैराग्यं समुपाश्रितः ।।८२।।

[महा०शा०२७८/१०-१५]

वाचोवेगं मनसः क्रोधवेगं
हिंसावेगमुदरोपस्थवेगम् ।
एतान्वेगान्विषहेद् वै तपस्वी
निन्दा चास्य हृदयं नोपहन्यात् ।।८३।।
मध्यस्थ एव तिष्ठेत प्रशंसानिन्दयोः समः ।
एतत् पवित्रं परमं पारिव्राजक आश्रमे ।।८४।।
महात्मा सर्वतो दान्तः सर्वत्रैवानपाश्रितः ।
अपूर्वचारकः सौम्यो अनिकेतः समाहितः ।।८५।।
वानप्रस्थगृहस्थाभ्यां न संसृज्येत कर्हिचित् ।
अज्ञातलिप्सं लिप्सेत न चैनं हर्ष आविशेत् ।।८६।।

विजानतां मोक्ष एष श्रमः स्यादविजानताम् ।
मोक्षयानमिदं कृत्स्नं विदुषां हारितोऽब्रवीत् ।।८७।।
अभयं सर्वभूतेभ्यो दत्त्वा यः प्रव्रजेद् गृहात् ।
लोकास्तेजोमयास्तस्य तथाऽऽनन्ताय कल्पते ।।८८।।

[महा०शा०२७८/१७-२२]

समशीतोष्णहर्षादीन् विषहेत स वै मुनिः ।।८९।।

[दाक्षिणात्यप्रत्यन्तर्गतानुशासनपर्वणि १४५ अध्यायान्तर्गत, १६/२३]

भैक्षं सर्वत्र गृह्णीयाच्चिन्तयेत् सततं निशि ।
कारणे चापि सम्प्राप्ते न कुप्येत कदाचन ।।९०।।
ब्रह्मचर्यं वने वासः शौचमिन्द्रियसंयमः ।
दया च सर्वभूतेषु तस्य धर्मः सनातनः ।।९१।।
विमुक्तः सर्वपापेभ्यो लघ्वाहारो जितेन्द्रियः ।
आत्मयुक्तः परां बुद्धिं लभते पापनाशिनीम् ।।९२।।
यदा भावं न कुरुते सर्वभूतेषु पापकम् ।
कर्मणा मनसा वाचा ब्रह्म संपद्यते तदा ।।९३।।
अनिष्ठुरोऽनहंकारो निर्द्वन्द्वो वीतमत्सरः ।
वीतशोकभयाबाधः पदं प्राप्नोत्यनुत्तमम् ।।९४।।
तुल्यनिन्दास्तुतिर्मौनी समलोष्टाश्मकाञ्चनः ।
समः शत्रौ च मित्रे च निर्वाणमधिगच्छति ।।९५।।

[महा० अनुशा०१६/२८-३३]

"अहिंसा ब्रह्मचर्यं च सत्यमार्जवमेव च ।
अक्रोधश्चानसूया च दमो नित्यमपैशुनम् ।
अष्टस्वेतेषु युक्तः स्याद् व्रतेषु नियतेन्द्रियः ।।९६।।

[महा०आश्व०४६/२९-३०]

"सर्वभावानतिक्रम्य लघुमात्रं परिव्रजेत् ।
समः सर्वेषु भूतेषु स्थावरेषु चरेषु च ।।९७।।
परं नोद्वेजयेत् कञ्चिन्न च कस्यचिदुद्विजेत् ।
विश्वास्यः सर्वभूतानामग्र्यो मोक्षविदुच्यते ।।९८।।

[महा०आश्व०४६/४०-४१)

समलोष्टाश्मकाञ्चनास्त्रिवर्गप्रवृत्तेष्वसक्तबुद्धयोऽरिमित्रोदासीनानां तुल्यदर्शनाः स्थावरजरायुजाण्डजस्वेदजोद्भिज्जानां भूतानां वाङ्मनःकर्मभिरनभिद्रोहिणोऽनिकेताः पर्वतपुलिनवृक्षमूलदेवतायतनान्यनुचरन्तो वासार्थमुपेयुर्नगरं ग्रामं वा नगरे पञ्चरात्रिका ग्रामे चैकरात्रिकाः प्रविश्य च प्राणधारणार्थं द्विजातीनां भवनान्यसंकीर्णकर्मणामुपतिष्ठेयुः पात्रपतितायाचितभैक्ष्याः कामक्रोधदर्पलोभमोहकार्पण्यदम्भपरिवादाभिमानहिंसानिवृत्ता इति ।।९९।। [महा० शा० १९२/३]

अनभ्याहतचित्तश्च दांतश्चाहतधीस्तथा ।
विमुक्तः सर्वपापेभ्यो नरो गच्छेत्ततो दिवम् ।।१००।।
अभयं सर्वभूतेभ्यो भूतानामभयं यतः ।
तस्य देहविमुक्तस्य भयं नास्ति कुतश्चन ।।१०१।।
यथा नागपदेऽन्यानि पदानि पदगामिनाम् ।
सर्वाण्येवावलीयंते तथा ज्ञानानि चेतसि ।।१०२।।
एवं सर्वमहिंसायां धर्मोऽर्थश्च महीयते ।
मृतः स नित्यं भवति यो हिंसां प्रतिपद्यते ।।१०३।।
अहिंसकस्ततः सम्यग्धृतिमान्नियतेन्द्रियः ।
शरणस्सर्वभूतानां गतिमाप्नोत्यनुत्तमाम् ।। १०४।।
एवं प्रज्ञानतृप्तस्य निर्भयस्य मनीषिणः ।
न मृत्युरधिको भावः सोऽमृतत्वं च गच्छति ।।१०५।।

[पद्म पु० १/१५/३७२-३७७]

मोक्षशास्त्रेषु निरतो ब्रह्मसूत्री जितेन्द्रियः ।
दम्भाहङ्कारनिर्मुक्तो निन्दापैशुन्यवर्जितः ।।१०६।।
आत्मज्ञानगुणोपेतो यतिर्मोक्षमवाप्नुयात् ।
अभ्यसेत्सततं देवं प्रणवाख्यं सनातनम् ।।१०७।।

[पद्म पु० ३/५९/२२-२३]

शौचं स्नानं तथा भिक्षा नित्यमेकान्तसेवनम् ।
भिक्षोश्चत्वारि कर्माणि पञ्चमं नैव विद्यते ।।१०८।।

[शि० पु० ६/२१/३२]

विशुद्धबुद्धिः समलोष्टकाञ्चनः
समस्तभूतेषु च तत्समाहितः ।
स्थानं परं शाश्वतमव्ययं परं
यतिर्हि मत्वा न पुनः प्रजायते ।।१०९।।

वेदाच्छ्रेष्ठाः सर्वयज्ञक्रियाश्च
यज्ञाज्जप्यं ज्ञानमार्गश्च जप्यात् ।
ज्ञानाद्ध्यानं सङ्गरागव्यपेतं
तस्मिन्प्राप्ते शाश्वतस्योपलब्धिः ।।११०।।
समाहितो ब्रह्मपरोऽप्रमादो
शुचिस्तथैकान्तरतिर्यतेन्द्रियः ।
समाप्नुयाद्योगमिमं महात्मा
विमुक्तिमाप्नोति ततः स्वयोगतः ।।१११।।

[मा० पु०४१/२४-२६]

इष्टानिष्टेषु भोगेषु व्यसनाभ्युदयेषु च ।
उपशान्तां वदेद्वाचमपि बाणैर्हतो भृशम् ।।११२।।
सत्यां वाचमहिंसां च वदेदनपवादिनीम् ।
अतिवादांस्तितिक्षेत आनृशंस्यमपैशुनम् ।।११३।।
न चेमं देहमाश्रित्य वैरं कुर्वीत केनचित् ।
न क्रुध्यन्तं प्रतिक्रुध्येदाक्रुष्टः कुशलं वदेत् ।।११४।। [शंख०]
भूतानां प्रियकारी स्यान्न परद्रोहकर्मधीः ।
नरा वशीकृता येन तेन देवा वशीकृताः ।।११५।। [जाबाल०]
भिक्षाटनं जपो ध्यानं स्नानं शौचं सुरार्चनम् ।
कर्तव्यानि षडेतानि यतिना नृपदण्डवत् ।।११६।।
स्नानं शौचं तथा भिक्षा नित्यमेकान्तशीलता ।
भिक्षोश्चत्वारि कर्माणि पंचमं नोपपद्यते ।।११७।।
ब्रह्मचर्यमहिंसा च सत्यमस्तेयमार्जवम् ।
वेदान्तश्रवणं ध्यानं भिक्षोः कर्माणि नित्यशः ।।११८।।

[मेधातिथि०]

*

# यतिना संग्राह्याणि

कौपीनयुगलं कन्थां दण्ड एकः परिग्रहः ।
यतेः परमहंसस्य नाधिकं तु विधीयते ।।१।।
यदि वा कुरुते रागादधिकस्य परिग्रहम् ।
रौरवं नरकं गत्वा तिर्यग्योनिषु जायते ।।२।।
विशीर्णान्यमलान्येव चैलानि ग्रथितानि तु ।
कृत्वा कन्थां बहिर्वासो धारयेद्धातुरञ्जितम् ।।३।।
एकवासा अवासा वा एकदृष्टिरलोलुपः ।
एक एव चरेन्नित्यं वर्षास्वेकत्र संवसेत् ।।४।।
कुटुम्बं पुत्रदारांश्च वेदाङ्गानि च सर्वशः ।
यज्ञं यज्ञोपवीतं च त्यक्त्वा गूढश्चरेद्यतिः ।।५।।

[ना०प०उ० ३/२८-३२]

कौपीनाच्छादनं वासः कन्थां शीतनिवारिणीम् ।
पादुके चापि गृह्णीयात्कुर्यान्नान्यस्य संग्रहम् ।।६।।
यदि वा कुरुते रागादधिकस्य परिग्रहम् ।
नरकं रौरवं गत्वा तिर्यग्योनिषु जायते ।।७।।
कौपीनयुगलं कन्थां दण्ड एकपरिग्रहः ।
यतेः परमहंसस्य नाधिकं तु विधीयते ।।८।।
विशीर्णान्यमलान्येव चैलानि ग्रथितानि तु ।
कृत्वा कन्थां बहिर्वासो धारयेद्धातुरञ्जितम् ।।९।। [अत्रि०]
आददीत प्रवृत्तेभ्यः साधुभ्यो धर्मसाधनम् ।
नाऽऽददीत निवृत्तेभ्यः प्रमादेनापि किंचन ।।१०।।
रथ्यायां .बहुवस्त्राणि भिक्षा सर्वत्र लभ्यते ।
भूमिशय्या सुविस्तीर्णा यतयः केन दुःखिताः ।।११।। [देवल०]
कौपीनाच्छादनार्थं तु वासोऽर्धस्य परिग्रहम् ।
कुर्यात्परमहंसस्तु दण्डमेकं तथैव च ।।१२।। [विष्णु०]
भिक्षान्नमात्रसंभोगी कन्थाकौपीनसंग्रही ।
श्रवणादिरतो यश्च स भिक्षुर्मोक्षमाप्नुयात् ।।१३।। [जमदग्नि०]

कौपीनाच्छादनं वासः कंथां सं (शी) तापहारिणीम् ।
पादुके चापि गृह्णीयात्कुर्यान्नान्यस्य संग्रहः(म् )।।१४।।

[विष्णु०४/७]

क्षौमं शाणमयं वाऽपि वासः काङ्क्षेच्च कौशिकम् ।
अजिनं चापि धर्मज्ञः साधुभ्यस्तानपीडयन् ।।१५।।
उपानहौ ग्रहीतव्ये कार्पासमयमप्युत ।
ऊर्णाकारोद्भवं वाऽपि यद्वाऽन्यत्स्यादयाचितम् ।।१६।।
सचैलः स्यादचैलो वा कन्थाप्रावरणोऽपि वा ।
एकवस्त्रेण वा विद्वान्व्रतं भिक्षुश्चरेद्यथा ।।१७।।
नात्यर्थं सुखदुःखाभ्यां शरीरमुपतापयेत् ।
स्तूयमानो न हृष्येत निन्दितो न शपेत्परम् ।।१८।।

[यति० समु०]

"ग्रासादाच्छादनादन्यन्न गृह्णीयात्कथंचन ।
यावदाहारयेत्तावत्प्रतिगृह्णीत नान्यथा ।।१९।।
मृदमापस्तथाऽन्नं च पत्रं पुष्पं फलानि च ।
असंवृत्तानि गृह्णीयात्प्रवृत्तानीह कार्यवान् ।।२०।।
अहिंसा सत्यमस्तेयं ब्रह्मचर्यापरिग्रहौ ।
अक्रोधो गुरुशुश्रूषा शौचं दुर्भुक्तिवर्जितम् ।
वाङ्मनःकायचेष्टासु प्रमादस्य च वर्जनम् ।।२१।।"

[पितामह०]

"दधिदुग्धे गुरोर्वाक्ये तक्रे वै दन्तधावने ।
हविर्ब्राह्मणकाम्येषु पुष्पमूलफलाशने ।।२२।।
नियमातिक्रमो नास्ति ब्राह्मणानामनुज्ञया ।
अध्यात्मपुस्तकं विप्रैर्दत्तं गृह्णीत भिक्षुकः ।।२३।।
न तावद् द्रव्यमादाय लेखयेद्दोषदर्शनात् ।
अष्टौ तान्यव्रतघ्नानि आपो मूलं फलं पयः ।।२४।।
हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधम् ।।२५।।" [वृद्धयाज्ञ०]

"काषायी मुण्डस्त्रिदण्डी कमण्डलुपवित्रपादुकासनकन्थामात्रः।।२६।।"

[देवल०७]

"कुण्डिकां चमसं शिक्यं त्रिविष्टपमुपानहौ ।
शीतोपघातिनीं कन्थां कौपीनाच्छादनं तथा ।।२७।।
पवित्रं स्नानशाटीं च उत्तरासङ्गमेव च ।
अतोऽतिरिक्तं यत्किंचित्सर्वं तद्वर्जयेद्यतिः ।।२८।।

[कु०उ०९-१०]

शौचं स्नानं तथा भिक्षा नित्यमेकान्तसेवनम् ।
भिक्षोश्चत्वारि कर्माणि पञ्चमं नैव विद्यते ।।२९।।

[शि०पु०६/२१/३२]

कुसुम्भवासा दण्डाढ्यो भिक्षाशी ख्यातिवर्जितः ।
अलाबुदारुमृद्वेणुपात्रं शस्तं न पञ्चमम् ।।३०।।

[स्क०पु०का०ख०४१/२४]

स्नानं त्रिषवणं प्रोक्तं नियमाः स्युस्त्रिदण्डिनाम् ।
न तत्परमहंसानां मुक्तानामात्मदर्शिनाम् ।।३१।।
मौनं योगासनं योगस्तितिक्षैकान्तशीलता ।
निःस्पृहत्वं समत्वं च सप्तैतान्येकदण्डिनः ।।३२।।
आनृशंस्यं क्षमा सत्यमहिंसा दम आर्जवम् ।
प्रीतिः प्रसादो माधुर्यमक्रोधश्च यमा दश ।।३३।। [अत्रि०]

*

# मुमुक्षुणा कर्तव्यानि

दृष्ट्वा जराभिभवनमसह्यं रोगपीडितम् ।
देहत्यागं पुनर्गर्भङ्गर्भक्लेशञ्च दारुणम् ।।१।।
नानायोनिनिवासञ्च वियोगञ्च प्रियैः सह ।
अप्रियैः सह संयोगमधर्माद् दुःखसंभवम् ।।२।।
पुनर्निरयसंवासं नानानरकयातनाः ।
कर्मदोषसमुद्भूता नृणां गतिरनेकधा ।।३।।
देहेष्वनित्यतां दृष्ट्वा नित्यतां परमात्मनः ।
कुर्वीत मुक्तये यत्नं यत्र तत्राश्रमे रतः ।।४।।

[स्क०पु०का०ख०४१/३२-३५]

सशिखं वपनं कृत्वा बहिःसूत्रं त्यजेद्बुधः ।
यदक्षरं परं ब्रह्म तत्सूत्रमिति धारयेत् ।।५।।
पुनर्जन्मनिवृत्त्यर्थं मोक्षस्याहर्निशं स्मरेत् ।
सूचनात्सूत्रमित्युक्तं सूत्रं नाम परं पदम् ।।६।।
तत्सूत्रं विदितं येन स मुमुक्षुः स भिक्षुकः।
स वेदवित्सदाचारः स विप्रः पङ्क्तिपावनः ।।७।।
येन सर्वमिदं प्रोतं सूत्रे मणिगणा इव ।
तत्सूत्रं धारयेद्योगी योगविद्ब्राह्मणो यतिः।।८।।
बहिःसूत्रं त्यजेद्विप्रो योगविज्ञानतत्परः ।
ब्रह्मभावमिदं सूत्रं धारयेद्यः स मुक्तिभाक् ।।९।।
नाशुचित्वं न चोच्छिष्टं तस्य सूत्रस्य धारणात् ।
सूत्रमन्तर्गतं येषां ज्ञानयज्ञोपवीतिनाम् ।।१०।।
ये तु सूत्रविदो लोके ते च यज्ञोपवीतिनः ।
ज्ञानमेव परं तेषां पवित्रं ज्ञानमीरितम् ।।११।।
अग्नेरिव शिखा नान्या यस्य ज्ञानमयी शिखा ।
स शिखीत्युच्यते विद्वान्नेतरे केशधारिणः ।।१२।।

कर्मण्यधिकृता ये तु वैदिके लौकिकेऽपि वा ।
ब्राह्मणाभासमात्रेण जीवन्ते कुक्षिपूरकाः ।
व्रजन्ते निरयं ये तु पुनर्जन्मनि जन्मनि ।।१३।।
वामांसदक्षकट्यन्तं ब्रह्मसूत्रं तु सव्यतः ।
अन्तर्बहिरिवात्यर्थं तत्त्वतन्तुसमन्वितम् ।।१४।।
नाभ्यादिब्रह्मरन्ध्रान्तप्रमाणं धारयेत्सुधीः ।
तेभिर्धार्यमिदं सूत्रं क्रियाङ्गं तन्तुनिर्मितम् ।।१५।।
शिखा ज्ञानमयी यस्य उपवीतं च तन्मयम् ।
ब्राह्मण्यं सकलं तस्य नेतरेषां तु किंचन ।।१६।।
इदं यज्ञोपवीतं तु परमं यत्परायणम् ।
विद्वान्यज्ञोपवीती संधारयेद्यः स मुक्तिभाक् ।।१७।।
बहिरन्तश्चोपवीती विप्रः संन्यस्तुमर्हति ।
एकयज्ञोपवीती तु नैव संन्यस्तुमर्हति ।।१८।।
तस्मात्सर्वप्रयत्नेन मोक्षापेक्षी भवेद्यतिः ।
बहिःसूत्रं परित्यज्य स्वान्तःसूत्रं तु धारयेत् ।।१९।।

बहिःप्रपञ्चशिखोपवीतित्वमनादृत्य प्रणवहंसशिखोपवीतित्वमवलम्ब्य मोक्षसाधनं कुर्यात् ।।२०।। [प०ब्र०उ० १-१६]

## यतेर्मोक्षसाधनम्

"अहिंसा सत्यमस्तेयं ब्रह्मचर्यापरिग्रहौ ।
भावशुद्धिर्हरौ भक्तिः संतोषः शौचमार्जवम् ।।१।।
आहारशुद्धिर्वैराग्यमप्रमादो दया नृणाम् ।
अस्नेहो गुरुशुश्रूषा श्रद्धा क्षान्तिर्दमः शमः ।।२।।
ह्रीस्तपो ज्ञानविज्ञानं योगो लघ्वशनं धृतिः ।
अदीनत्वमनुद्धर्षो ब्रह्मधीः समदर्शनम् ।।३।।
भिक्षाटनं जपो ध्यानं त्यागः कर्मफलस्य च ।
एष स्वधर्मो विख्यातो यतीनां मुक्तिमिच्छताम् ।।४।।

अभ्युत्थानं प्रियालापं गुरुवत्प्रीतिपूजनम् ।
यतीनां व्रतवृद्धानां स्वीयधर्मानुवर्तिनाम् ।।५।।
कर्तव्यमन्यथा योगी स्वधर्मात्प्रच्युतो भवेत् ।
स्वधर्मस्थान्यतीन्वृद्धान्देवांश्च प्रणमेद्यतिः ।।६।।
नान्यमाश्रमिणं कंचित्प्रशस्तमपि संनमेत् ।
अपि शास्त्रसमायुक्तं सदाचारसमन्वितम् ।।७।।
साधुवृत्तं गृहस्थाढ्यं न नमस्येत्क्वचिद्यतिः ।।"८।। [अत्रि०]
"क्षमातीर्थं तपस्तीर्थं तीर्थमिन्द्रियनिग्रहः ।
सर्वभूतदयातीर्थं ध्यानतीर्थमनुत्तमम् ।।९।।
एतानि पञ्चतीर्थानि सत्यषष्ठानि सर्वदा ।
देहे तिष्ठन्ति सर्वस्य एषु स्नानं समाचरेत् ।।१०।।
न तथा पुष्करे स्नात्वा गयायां कुरुजाङ्गले ।
मुच्यते पुरुषः पापाद्यथा स्नातः क्षमादिषु ।।११।।
इदं तीर्थमिदं नेति ये नरा भेददर्शिनः ।
तेषां विधीयते तीर्थगमनं तत्फलानि च ।।१२।।
सर्वं ब्रह्मेति यो वेत्ति न तीर्थं तस्य किंचन ।
जाग्रत्स्वप्नसुषुप्तेषु ब्रह्मण्येव स वर्तते ।।१३।।
स्नानं मनोमलत्यागो दानं चाभयदक्षिणा ।
ज्ञानं तत्त्वार्थसंबोधो ध्यानं निर्विषयं मनः ।।१४।।
मनसश्चेन्द्रियाणां च ऐकाग्र्यं परमं तपः ।
तज्ज्यायः सर्वधर्मेभ्यः स धर्मः पर उच्यते ।।१५।।" [बृहस्पति०]
"संकल्पप्रभवान्कामांस्त्यक्त्वा सर्वानशेषतः।
मनसैवेन्द्रियग्रामं विनियम्य समन्ततः ।।१६।।
शनैः शनैरुपरमेद्बुद्ध्या धृतिगृहीतया ।
आत्मसंस्थं मनः कृत्वा न किंचिदपि चिन्तयेत् ।।१७।।
यतो यतो निश्चरति मनश्चञ्चलमस्थिरम् ।
ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ।।१८।।
प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमम् ।
उपैति शान्तरजसं ब्रह्मभूतमकल्मषम् ।।१९।।

युञ्जन्नेवं सदात्मानं योगी विगतकल्मषः ।
सुखेन ब्रह्मसंस्पर्शमत्यन्तं सुखमश्नुते ।।२०।।

[श्रीमद्भ०६/२४-२८]

वृत्तिहीनं मनःकृत्वा क्षेत्रज्ञं परमात्मनि ।
एकीकृत्य विमुच्येत योगोऽयं मुख्य उच्यते ।।२१।।

[दक्ष०७/१५]

अपापमशठं वृत्तमजिह्मं नित्यमाचरेत् ।
इन्द्रियाणि समाहृत्य कूर्मोऽङ्गानीव सर्वशः ।।२२।।
क्षीणेन्द्रियमनोवृत्तिर्निराशीर्निष्परिग्रहः ।
निर्द्वन्द्वो निर्नमस्कारो निःस्वधाकार एव च ।।२३।।
निर्ममो निरहंकारो निरपेक्षो निराशिषः ।
विविक्तदेशसंसक्तो मुच्यते नात्रसंशयः ।।२४।।

[ना०प०उ०३/७४-७६]

## अजिह्वादीनां लक्षणम्

अजिह्वः षण्डकः पङ्गुरन्धो बधिर एव च ।
मुग्धश्च मुच्यते भिक्षुः षड्भिरेतैर्न संशयः ।।२५।।
इदमिष्टमिदं नेति योऽश्नन्नपि न सज्जति ।
हितं सत्यं मितं वक्ति तमजिह्वं प्रचक्षते ।।२६।।
अद्य जातां यथा नारीं तथा षोडशवार्षिकीम् ।
शतवर्षां च यो दृष्ट्वा निर्विकारः स षण्डकः ।।२७।।
भिक्षार्थमटनं यस्य विण्मूत्रकरणाय च ।
योजनान्न परं याति सर्वथा पङ्गुरेव सः ।।२८।।
तिष्ठतो व्रजतो वापि यस्य चक्षुर्न दूरगम् ।
चतुर्युगां भुवं मुक्त्वा परिव्राट् सोऽन्ध उच्यते ।।२९।।
हिताहितं मनोरामं वचः शोकावहं तु यत् ।
श्रुत्वापि न शृणोतीव बधिरः स प्रकीर्तितः ।।३०।।

सान्निध्ये विषयाणां यः समर्थोऽविकलेन्द्रियः ।
सुप्तवद्वर्तते नित्यं स भिक्षुर्मुग्ध उच्यते ।।३१।।

[ना०प०उ०३/६३-६८]

ब्रह्मचर्येण संतिष्ठेदप्रमादेन मस्करी ।
दर्शनं स्पर्शनं केलिः कीर्तनं गुह्यभाषणम् ।।३२।।
संकल्पोऽध्यवसायश्च क्रियानिर्वृतिरेव च ।
एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः ।
विपरीतं ब्रह्मचर्यमनुष्ठेयं मुमुक्षुभिः ।।३३।।

[क०रु०उ०५-६-१/२]

ब्रह्मचर्ये स्थितं धैर्यं ब्रह्मचर्ये स्थितं तपः ।
ये स्थिता ब्रह्मचर्येण ब्राह्मणास्ते दिवि स्थिताः ।।३४।। [वायु पु०]
"अहंकारसुतं वित्तभ्रातरं मोहमन्दिरम् ।
आशापत्नीं त्यजेद्यावत्तावन्मुक्तो न संशयः ।।३५।।

[मैत्रे० उ०२/१२]

अभेददर्शनं ज्ञानं ध्यानं निर्विषयं मनः ।
स्नानं मनोमलत्यागः शौचमिन्द्रियनिग्रहः ।।३६।।
ब्रह्मामृतं पिबेद्भैक्षमाचरेद्देहरक्षणे ।
वसेदेकान्तिको भूत्वा चैकान्ते द्वैतवर्जिते ।
इत्येवमाचरेद्धीमान्स एवं मुक्तिमाप्नुयात् ।।३७।।"

[स्क०उ०११-१२] [मैत्रे०उ०२/२-३]

उत्तमा तत्त्वचिन्तैव मध्यमं शास्त्रचिन्तनम् ।
अधमा मन्त्रचिन्ता च तीर्थभ्रान्त्यधमाधमा ।।३८।।

[मैत्रे०उ०२/२१]

पाषाणलोहमणिमृण्मयविग्रहेषु पूजा पुनर्जननभोगकरी मुमुक्षोः ।
तस्माद्यतिः स्वहृदयार्चनमेव कुर्याद्बाह्यार्चनं परिहरेदपुनर्भवाय ।।३९।।

[मैत्रे०उ०२/२६]

सर्वत्र ममताशून्यः सर्वत्र समतायुतः ।
वृक्षमूलनिकेतश्च मुमुक्षुरिह शस्यते ।।४०।।

[स्क०पु०का०ख०४१/१९]

न शब्दशास्त्राभिरतस्य मोक्षो न चैव रम्यावसथप्रियस्य ।
न भोजनाच्छादनतत्परस्य न लोकचित्तग्रहणे रतस्य ।।४१।।
एकान्तशीलस्य दृढव्रतस्य मोक्षो भवेत्प्रीतिनिवर्तकस्य ।
अध्यात्मयोगैकरतस्य सम्यङ् मोक्षो भवेन्नित्यमहिंसकस्य ।।४२।।

[आपस्त०१०/७-८]

न कुट्यां नोदके सङ्गः न चैले न त्रिपुष्करे ।
नागारे नाऽऽसने नान्ने यस्य वै मोक्षवित्तमः ।।४३।।

[वसिष्ठ०१०/१७]

इन्द्रियाण्युपसंहृत्य कूर्मोऽङ्गानीव सर्वशः ।
क्षीणेन्द्रियमनोबुद्धिर्निरीहः सर्वतत्त्ववित् ।।४४।।
निर्द्वन्द्वो निर्नमस्कारो निःस्वधाकार एव च ।
निर्ममो निरहंकारो निर्योगक्षेम आत्मवान् ।।४५।।
निराशीर्निर्गुणः शान्तो निरासक्तो निराश्रयः ।
आत्मसङ्गी च तत्त्वज्ञो मुच्यते नात्रसंशयः ।।४६।।

[महा०आश्व०४६/४४-४६]

"यस्तु वेद निराधारं ज्ञानं तत्त्वविनिश्चयात् ।
सर्वभूतस्थमात्मानं स सर्वगतिरिष्यते ।।४७।।
यो विद्वान् सहवासं च विवासं चैव पश्यति ।
तथैवैकत्वनानात्वे स दुःखात् प्रतिमुच्यते ।।४८।।
यो न कामयते किंचिन्न किंचिदवमन्यते ।
इह लोकस्थ एवैष ब्रह्मभूयाय कल्पते ।।४९।।
प्रधानगुणतत्त्वज्ञः सर्वभूतप्रधानवित् ।
निर्ममो निरहंकारो मुच्यते नात्र संशयः ।।५०।।
निर्द्वन्द्वो निर्नमस्कारो निःस्वधाकार एव च ।
निर्गुणं नित्यमद्वन्द्वं प्रशमेनैव गच्छति ।।५१।।
हित्वा गुणमयं सर्वं कर्म जन्तुः शुभाशुभम् ।
उभे सत्यानृते हित्वा मुच्यते नात्र संशयः ।।५२।।
अव्यक्तयोनिप्रभवो बुद्धिस्कन्धमयो महान् ।
महाहंकारविटपः इन्द्रियाङ्कुरकोटरः ।।५३।।

महाभूतविशालश्च विशेषयति शाखिनः ।
सदापत्रः सदापुष्पः शुभाशुभफलोदयः ।।५४।।
आजीव्यः सर्वभूतानां ब्रह्मवृक्षः सनातनः ।
एनं छित्त्वा च भित्त्वा च तत्त्वज्ञानासिना बुधः ।।५५।।
हित्वा सङ्गमयान् पाशान् मृत्युजन्मजरोदयान् ।
निर्ममो निरहंकारो मुच्यते नात्र संशयः ।।५६।।

[महा०आश्व०अनु०४७/६-१५]

यः स्यादेकायने लीनस्तूष्णीं किंचिदचिन्तयन् ।
पूर्वं पूर्वं परित्यज्य स तीर्णो बन्धनात् भवेत् ।।५७।।
सर्वमित्रः सर्वसहः शमे रक्तो जितेन्द्रियः ।
व्यपेतभयमन्युश्च आत्मवान् मुच्यते नरः ।।५८।।
आत्मवत् सर्वभूतेषु यश्चरेन्नियतः शुचिः ।
अमानी निरहंकारः सर्वतो मुक्त एव सः ।।५९।।
जीवितं मरणं चोभे सुखदुःखे तथैव च ।
लाभालाभे प्रियद्वेष्ये यः समः स च मुच्यते ।।६०।।
न कस्यचित् स्पृहयते नावजानाति किंचन ।
निर्द्वन्द्वो वीतरागात्मा सर्वथा मुक्त एव सः ।।६१।।
अनमित्रश्च निर्बन्धुरनपत्यश्च यः क्वचित् ।
त्यक्तधर्मार्थकामश्च निराकाङ्क्षी स मुच्यते ।।६२।।
नैव धर्मी न चाधर्मी पूर्वोपचितहापकः ।
धातुक्षयप्रशान्तात्मा निर्द्वन्द्वः स विमुच्यते ।।६३।।
अकर्मवान् विकाङ्क्षश्च पश्येज्जगदशाश्वतम् ।
अश्वत्थसदृशं नित्यं जन्ममृत्युजरायुतम् ।।६४।।
वैराग्यबुद्धिः सततमात्मदोषव्यपेक्षकः ।
आत्मबन्धविनिर्मोक्षं स करोत्यचिरादिव ।।६५।।
अगन्धमरसस्पर्शमशब्दमपरिग्रहम् ।
अरूपमनभिज्ञेयं दृष्ट्वाऽऽत्मानं विमुच्यते ।।६६।।
पञ्चभूतगुणैर्हीनममूर्तिमदहेतुकम् ।
अगुणं गुणभोक्तारं यः पश्यति स मुच्यते ।।६७।।

विहाय सर्वसंकल्पान् बुद्ध्या शारीरमानसान् ।
शनैर्निर्वाणमाप्नोति निरिन्धन इवानलः ।।६८।।
सर्वसंस्कारनिर्मुक्तो निर्द्वन्द्वो निष्परिग्रहः ।
तपसा इन्द्रियग्रामं यश्चरेन्मुक्त एव सः ।।६९।।

[महा०आश्व० अनु०१९/१-१३]

सर्वग्राम्यास्तथाऽऽरण्या याश्च लोके प्रवृत्तयः ।
निन्दां चैव प्रशंसां च यो नाश्रयति मुच्यते ।।७०।।

[महा०शा०१६०/२१]

क्षुत्पिपासादयो भावा जिता यस्येह देहिनः ।
क्रोधो लोभस्तथा मोहः सत्त्ववान् मुक्त एव सः ।।७१।।
द्यूते पाने तथा स्त्रीषु मृगयायां च यो नरः ।
न प्रमाद्यति सम्मोहात् सततं मुक्त एव सः ।।७२।।
दिवसे दिवसे नाम रात्रौ रात्रौ पुमान् सदा ।
भोक्तव्यमिति यः खिन्नो दोषबुद्धिः स उच्यते ।।७३।।
आत्मभावं तथा स्त्रीषु मुक्तमेव पुनः पुनः ।
यः पश्यति सदा मुक्तो यथावन्मुक्त एव सः ।।७४।।
सम्भवं च विनाशं च भूतानां चेष्टितं तथा ।
यस्तत्त्वतो विजानाति लोकेऽस्मिन् मुक्त एव सः ।।७५।।
प्रस्थितं वा सहस्रेषु यात्रार्थं चैव कोटिषु ।
प्रासादे मञ्चकं स्थानं यः पश्यति स मुच्यते ।।७६।।
मृत्युनाभ्याहतं लोकं व्याधिभिश्चोपपीडितम् ।
अवृत्तिकर्शितं चैव यः पश्यति स मुच्यते ।।७७।।
यः पश्यति स सन्तुष्टो न पश्यंश्च विहन्यते ।
यश्चाप्यल्पेन संतुष्टो लोकेऽस्मिन् मुक्त एव सः ।।७८।।
अग्नीषोमाविदं सर्वमिति यश्चानुपश्यति ।
न च संस्पृश्यते भावैरद्भुतैर्मुक्त एव सः ।।७९।।
पर्यङ्कशय्या भूमिश्च समाने यस्य देहिनः ।
शालयश्च कदन्नं च यस्य स्यान्मुक्त एव सः ।।८०।।

क्षौमं च कुशचीरं च कौशेयं वल्कलानि च ।
आविकं चर्म च समं यस्य स्यान्मुक्त एव सः ।।८१।।
पञ्चभूतसमुद्भूतं लोकं यश्चानुपश्यति ।
तथा च वर्तते दृष्ट्वा लोकेऽस्मिन्मुक्त एव सः ।।८२।।
सुखदुःखे समे यस्य लाभालाभौ जयाजयौ ।
इच्छाद्वेषौ भयोद्वेगौ सर्वथा मुक्त एव सः ।।८३।।
रक्तमूत्रपुरीषाणां दोषाणां संचयं तथा ।
शरीरं दोषबहुलं दृष्ट्वा चैव विमुच्यते ।।८४।।
वलीपलितसंयोगे कार्श्यं वैवर्ण्यमेव च ।
कुब्जभावं च जरया यः पश्यति स मुच्यते ।।८५।।
पुंस्त्वोपघातं कालेन दर्शनोपरमं तथा ।
बाधिर्यं प्राणमन्दत्वं यः पश्यति स मुच्यते ।।८६।।
गतानृषींस्तथा देवानसुरांश्च तथा गतान् ।
लोकादस्मात् परं लोकं यः पश्यति स मुच्यते ।।८७।।
प्रभावैरन्वितास्तैस्तैः पार्थिवेन्द्रा सहस्रशः ।
ये गताः पृथिवीं त्यक्त्वा इति ज्ञात्वा विमुच्यते ।।८८।।
अर्थांश्च दुर्लभाँल्लोके क्लेशांश्च सुलभांस्तथा ।
दुःखं चैव कुटुम्बार्थे यः पश्यति स विमुच्यते ।।८९।।
अपत्यानां च वैगुण्यं जनं विगुणमेव च ।
पश्यन् भूयिष्ठशो लोके को मोक्षं नाभिपूजयेत् ।।९०।।
शास्त्राल्लोकाच्च यो बुद्धः सर्वं पश्यति मानवः ।
असारमिव मानुष्यं सर्वथा मुक्त एव सः ।। [महा॰ शा॰२८८/२५-४५]
अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम् ।
आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ।।९२।।
इन्द्रियार्थेषु वैराग्यमनहंकार एव च ।
जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ।।९३।।
असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु ।
नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु ।।९४।।
मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ।
विविक्तदेशसेवित्वमरतिर्जनसंसदि ।।९५।।

अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम् ।
एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ।।९६।।

[श्रीमद्भ० १३/७-११]

असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः ।
नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति ।।९७।।
बुद्ध्या विशुद्धया युक्तो धृत्यात्मानं नियम्य च ।
शब्दादीन्विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च ।।९८।।
विविक्तसेवी लघ्वाशी यतवाक्कायमानसः ।
ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः ।।९९।।
अहंकारं बलं दर्पं कामं क्रोधं परिग्रहम् ।
विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते ।।१००।।
ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति ।
समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ।।१०१।।
भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ।।१०२।।

[श्रीमद्भ० १८/४९-५५]

अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च ।
निर्ममो निरहंकारः समदुःखसुखः क्षमी ।।१०३।।
संतुष्टः सततं योगी यतात्मा दृढनिश्चयः ।
मय्यर्पितमनोबुद्धिर्यो मद्भक्तः स मे प्रियः ।।१०४।।
यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ।
हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः ।।१०५।।
अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः ।
सर्वारम्भपरित्यागी यो मद्भक्तः स मे प्रियः ।।१०६।।
यो न हृष्यति न द्वेष्टि न शोचति न काङ्क्षति ।
शुभाशुभपरित्यागी भक्तिमान्यः स मे प्रियः ।।१०७।।
समः शत्रौ च मित्रे च तथा मानापमानयोः ।
शीतोष्णसुखदुःखेषु समः सङ्गविवर्जितः ।।१०८।।

तुल्यनिन्दास्तुतिर्मौनी संतुष्टो येन केनचित् ।
अनिकेतः स्थिरमतिर्भक्तिमान्मे प्रियो नरः ।।१०९।।
ये तु धर्म्यामृतमिदं यथोक्तं पर्युपासते ।
श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः ।।११०।।

[श्री मद्भ० १२/१३-२०]

## यतीनां निषिद्धानि

अस्थिस्थूणं स्नायुबद्धं मांसशोणितलेपितम् ।
चर्मावनद्धं दुर्गन्धिपूर्णं मूत्रपुरीषयोः ।।१।।
जराशोकसमाविष्टं रोगायतनमातुरम् ।
रजस्वलमनित्यं च भूतावासमिमं त्यजेत् ।।२।।
मांसासृक्पूयविण्मूत्रस्नायुमज्जास्थिसंहतौ ।
देहे चेत्प्रीतिमान्मूढो भविता नरकेऽपि सः ।।३।।
सा कालपुत्रपदवी सा महावीचिवागुरा ।
सासिपत्रवनश्रेणी या देहेऽहमिति स्थितिः ।।४।।
सा त्याज्या सर्वयत्नेन सर्वनाशेऽप्युपस्थिते ।
स्प्रष्टव्या सा न भव्येन सा श्वमांसेव पुल्कषी ।।५।।

[ना०प०उ० ३/४६-५०]

नटादिप्रेक्षणं द्यूतं प्रमदां सुहृदं तथा ।
भक्ष्यं भोज्यमुदक्यां च षण्न पश्येत्कदाचन ।।६।।
रागद्वेषं मदं मायां द्रोहं मोहं परात्मसु ।
षडेतानि यतिर्नित्यं मनसापि न चिन्तयेत् ।।७।।
मञ्चकं शुक्लवस्त्रं च स्त्रीकथा लौल्यमेव च ।
दिवा स्वापं च यानं च यतीनां पातनानि षट् ।।८।।
दूरयात्रां प्रयत्नेन वर्जयेदात्मचिन्तकः ।
न तीर्थसेवी नित्यं स्यान्नोपवासपरो यतिः ।
न चाध्ययनशीलः स्यान्न व्याख्यानपरो भवेत् ।।९।।

[ना०प०उ० ३/६९-७३]

नामगोत्रादिवरणं देशं कालं श्रुतं कुलम् ।
वयो वृत्तं व्रतं शीलं ख्यापयेन्नैव सद्यतिः ।।१०।।

न संभाषेत्स्त्रियं कांचित्पूर्वदृष्टां च न स्मरेत् ।
कथां च वर्जयेत्तासां न पश्येल्लिखितामपि ।।११।।
एतच्चतुष्टयं मोहात्स्त्रीणामाचरतो यतेः ।
चित्तं विक्रियतेऽवश्यं तद्विकारात्प्रणश्यति ।।१२।।
तृष्णा क्रोधोऽनृतं माया लोभमोहौ प्रियाप्रिये ।
शिल्पं व्याख्यानयोगश्च कामो रागपरिग्रहः ।।१३।।
अहंकारो ममत्वं च चिकित्सा धर्मसाहसम् ।
प्रायश्चित्तं प्रवासश्च मन्त्रौषधपराशिषः ।।१४।।
प्रतिषिद्धानि चैतानि सेवमानो व्रजेदधः ।
आगच्छ गच्छ तिष्ठेति स्वागतं सुहृदोऽपि वा ।।१५।।
सम्माननं च न ब्रूयान्मुनिर्मोक्षपरायणः ।
प्रतिग्रहं न गृह्णीयान्नैव चान्यं प्रदापयेत् ।।१६।।
प्रेरयेद्वा तथा भिक्षुः स्वप्नेऽपि न कदाचन ।
जायाभ्रातृसुतादीनां बन्धूनां च शुभाशुभम् ।।१७।।
श्रुत्वा दृष्ट्वा न कम्पेत शोकहर्षौ त्यजेद्यतिः ।।१८।।

[ना०प०उ०४/१-९$\frac{1}{2}$]

हस्ताभ्यां नद्युत्तरणं न कुर्यान्न वृक्षमारोहेन्न यानादिरूढो न क्रयविक्रयपरो न किंचिद्विनिमयपरो न दाम्भिको नानृतवादी न यतेः किंचित्कर्तव्यमस्त्यस्ति चेत्सांकर्यम् ।।१९।।[ना०प०उ०५/१]

आशीर्युक्तानि कर्माणि हिंसायुक्तानि यानि च ।
लोकसंग्रहयुक्तानि नैव कुर्यान्न कारयेत् ।।२०।।
नासच्छास्त्रेषु सज्जेत नोपजीवेत जीविकाम् ।
अतिवादांस्त्यजेत्तर्कान्पक्षं कंचन नाश्रयेत् ।।२१।।
न शिष्याननुबध्नीत ग्रन्थान्नैवाभ्यसेद्बहून् ।
न व्याख्यामुपयुञ्जीत नारम्भानारभेत्क्वचित् ।।२२।।

[ना०प०उ०५/२०-२२]

न कुर्यान्न वदेत्किंचिन्न ध्यायेत्साध्वसाधु वा ।
आत्मारामोऽनया वृत्त्या विचरेज्जडवन्महीम् ।।२३।।

[ना०प०उ०५/२४]

कामक्रोधौ तथा दर्पलोभमोहादयश्च ये ।
तांस्तु दोषान्परित्यज्य परिव्राड् भयवर्जितः ।।२४।।

[ना०प०उ०५/३२]

द्वाविमौ न विरज्येते विपरीतेन कर्मणा ।
निरारम्भो गृहस्थश्च कार्यवांश्चैव भिक्षुकः ।।२५।।
माद्यति प्रमदां दृष्ट्वा सुरां पीत्वा च माद्यति ।
तस्माद् दृष्टिविषां नारीं दूरतः परिवर्जयेत् ।।२६।।
संभाषणं सह स्त्रीभिरालापः प्रेक्षणं तथा ।
नृत्तं गानं सहासं च परिवादांश्च वर्जयेत् ।।२७।।
न स्नानं न जपः पूजा न होमो नैव साधनम् ।
नाग्निकार्यादिकार्यं च नैतस्यास्तीह नारद ।।२८।।
नार्चनं पितृकार्यं च तीर्थयात्रा व्रतानि च ।
धर्माधर्मादिकं नास्ति न विधिर्लौकिकी क्रिया ।।२९।।
संत्यजेत्सर्वकर्माणि लोकाचारं च सर्वशः ।
कृमिकीटपतङ्गांश्च तथा योगी वनस्पतीन् ।।३०।।
न नाशयेद्बुधो जीवन्परमार्थमतिर्यतिः ।
नित्यमन्तर्मुखः स्वच्छः प्रशान्तात्मा स्वपूर्णधीः ।।३१।।
अन्तःसङ्गपरित्यागी लोके विहर नारद ।
नाराजके जनपदे चरत्येकचरो मुनिः ।।३२।।
निःस्तुतिर्निर्नमस्कारो निःस्वधाकार एव च ।
चलाचलनिकेतश्च यतिर्यादृच्छिको भवेत् ।।३३।।

[ना०प०उ०६/३०-३५]

विरक्तः सन्यो वर्षासु ध्रुवशीलोऽष्टौमास्येकाकी चरन्नैकत्र निवसेद्भिक्षुर्भयात्सारङ्गवदेकत्र न तिष्ठेत्स्वगमनविरोधग्रहणं न कुर्याद्धस्ताभ्यां नद्युत्तरणं न कुर्यान्न वृक्षारोहणमपि न देवोत्सवदर्शनं कुर्यान्नैकत्राशी न बाह्यदेवार्चनं कुर्यात्स्वव्यतिरिक्तं सर्वं त्यक्त्वा मधुकरवृत्त्याऽऽहारमाहरन्कृशो भूत्वा मेदोवृद्धिमकुर्वन्नाज्यं रुधिरमिव त्यजेदेकत्रान्नं पललमिव गन्धलेपनमशुद्धिलेपनमिव क्षारमन्त्यजमिव वस्त्रमुच्छिष्टपात्रमिवाभ्यङ्गं स्त्रीसङ्गमिव मित्राह्लादकं मूत्रमिव स्पृहां गोमांसमिव ज्ञातचरदेशं चाण्डालवाटिकामिव स्त्रियमहिमिव स्वर्णं

कालकूटमिव सभास्थलं श्मशानस्थलमिव राजधानीं कुम्भीपाकमिव शवपिण्डवदेकत्रान्नं न देहान्तरदर्शनं प्रपञ्चवृत्तिं परित्यज्य स्वदेशमुत्सृज्य ज्ञातचरदेशं विहाय विस्मृतपदार्थः पुनः प्राप्तहर्ष इव स्वमानन्दमनुस्मरन् स्वशरीराभिमानदेशविस्मरणं मत्वा स्वशरीरं शवमिव हेयमुपगम्य कारागृहविनिर्मुक्तचोरवत्पुत्राप्तबन्धुभवस्थलं विहाय दूरतो वसेत् ॥३४॥

[ना०प०उ०७/१]

आज्यं रुधिरमिव त्यजेदेकत्रान्नं पललमिव गन्धलेपनमशुद्धलेपनमिव क्षारमन्त्यजमिव वस्त्रमुच्छिष्टपात्रमिवाभ्यङ्गं स्त्रीसङ्गमिव मित्राह्लादकं मूत्रमिव स्पृहां गोमांसमिव ज्ञातचरदेशं चाण्डालवाटिकामिव स्त्रियमहिमिव स्वर्णं कालकूटमिव सभास्थलं श्मशानस्थलमिव राजधानीं कुम्भीपाकमिव शवपिण्डवदेकत्रान्नं न देवतार्चनम्। प्रपञ्चवृत्तिं परित्यज्य जीवन्मुक्तो भवेत् ॥३५॥

[सं०उ०२/७९]

घृतं श्वमूत्रसदृशं मधु स्यात्सुरया समम्।<br>
तैलं सूकरमूत्रं स्यात्सूपं लशुनसंमितम् ॥३६॥<br>
माषापूपादि गोमांसं क्षीरं मूत्रसमं भवेत्।<br>
तस्मात्सर्वप्रयत्नेन घृतादीन्वर्जयेद्यतिः ।<br>
घृतसूपादिसंयुक्तमन्नं नाद्यात्कदाचन ॥३७॥[सं०उ०२/७५-७६]<br>
आसनं पात्रलोपश्च संचयः शिष्यसंचयः ।<br>
दिवास्वापो वृथालापो यतेर्बन्धकराणि च ॥३८॥<br>
वर्षाभ्योऽन्यत्र यत्स्थानमासनं तदुदाहृतम्।<br>
उक्तालाब्वादि पात्राणामेकस्यापीह संग्रहः ॥३९॥<br>
यतेः संव्यवहाराय पात्रलोपः स उच्यते ।<br>
गृहीतस्य तु दण्डादेर्द्वितीयस्य परिग्रहः ॥४०॥<br>
कालान्तरोपभोगार्थं संचयः परिकीर्तितः।<br>
शुश्रूषा लाभपूजार्थं यशोऽर्थं वा परिग्रहः ॥४१॥<br>
शिष्याणां न तु कारुण्याच्छिष्यसंग्रह ईरितः।<br>
विद्या दिवा प्रकाशत्वादविद्या रात्रिरुच्यते ॥४२॥<br>
विद्याभ्यासे प्रमादो यः स दिवास्वाप उच्यते ।<br>
आध्यात्मिकीं कथां मुक्त्वा भिक्षावार्तां विना तथा ॥४३॥

अनुग्रहं परिप्रश्नं वृथाजल्पोऽन्य उच्यते ।
एकान्नं मदमात्सर्यं गन्धपुष्पविभूषणम् ।।४४।।
ताम्बूलाभ्यञ्जने क्रीडा भोगाकाङ्क्षा रसायनम् ।
कत्थनं कुत्सनं स्वस्ति ज्योतिश्च क्रयविक्रयम् ।।४५।।
क्रियाकर्म विवादश्च गुरुवाक्यविलङ्घनम् ।
संधिश्च विग्रहो यानं मञ्चकं शुक्लवस्त्रकम् ।।४६।।
शुक्रोत्सर्गो दिवास्वापो भिक्षाधारस्तु तैजसम् ।
विषं चैवायुधं बीजं हिंसां तैक्ष्ण्यं च मैथुनम् ।।४७।।
त्यक्तं संन्यासयोगेन गृहधर्मादिकं व्रतम् ।
गोत्रादिचरणं सर्वं पितृमातृकुलं धनम् ।
प्रतिषिद्धानि चैतानि सेवमानो व्रजेदधः ।।४८।।

[सं० उ० २/७९-८९]

सुजीर्णोऽपि सुजीर्णासु विद्वांस्त्रीषु न विश्वसेत् ।
सुजीर्णास्वपि कन्थासु सज्जते जीर्णमम्बरम् ।।४९।।
स्थावरं जङ्गमं बीजं तैजसं विषमायुधम् ।
षडेतानि न गृह्णीयाद्यतिर्मूत्रपुरीषवत् ।।५०।।
नैवाददीत पाथेयं यतिः किंचिदनापदि ।
पक्वमापत्सु गृह्णीयाद्यावदन्नं न लभ्यते ।।५१।।
नीरुजश्च युवा चैव भिक्षुर्नावसथे वसेत् ।
परार्थं न प्रतिग्राह्यं न दद्याच्च कथंचन ।।५२।।
दैन्यभावात्तु भूतानां सौभगाय यतिश्चरेत् ।
पक्वं वा यदि वाऽपक्वं याचमानो व्रजेदधः ।।५३।।
अन्नदानपरो भिक्षुर्वस्त्रादीनां प्रतिग्रही ।
आविकं वाऽनाविकं वा तथा पट्टपटानपि ।।५४।।
प्रतिगृह्य यतिश्चैतान्पतत्येव न संशयः ।
अद्वैतं नावमाश्रित्य जीवन्मुक्तत्वमाप्नुयात् ।।५५।।

[सं० उ० २/९०-९६]

स्वरूपानुसंधानव्यतिरिक्तान्यशास्त्राभ्यास उष्ट्रकुङ्कुमभारवद्व्यर्थः । न योगशास्त्रप्रवृत्तिः । न सांख्यशास्त्राभ्यासः । न मन्त्रतन्त्रव्यापारः । नेतरशास्त्रप्रवृत्तिर्यतेरस्ति । अस्ति चेच्छवालंकारवत्कर्माचारविद्यादूरः ।

न परिव्राण्नामकीर्तनपरो यद्यत्कर्मंकरोति तत्तत्फलमनुभवति । एरण्डतैलफेनवत्सर्वं परित्यजेत् । न देवताप्रसादग्रहणम् । न बाह्यदेवाभ्यर्चनं कुर्यात् । न शूद्रस्त्रीपतितोदक्या संभाषणम् । न यतेर्देवपूजनोत्सवदर्शनम् ।।५६।। [सं० उ०]

भिक्षुः सौवर्णादीनां नैव परिग्रहेन्न लोकं नावलोकं च चाबाधकः क इति चेद् बाधकोऽस्त्येव यस्माद्भिक्षुर्हिरण्यं रसेन दृष्टं च स ब्रह्महा भवेद्यस्माद्भिक्षुर्हिरण्यं रसेन स्पृष्टं चेत्स पौल्कसो भवेत् यस्माद्भिक्षुर्हिरण्यं रसेन ग्राह्यं च स आत्महा भवेत् तस्माद्भिक्षुर्हिरण्यं रसेन न दृष्टं च स्पृष्टं च न ग्राह्यं च । सर्वे कामा मनोगता व्यावर्तन्ते दुःखे नोद्विग्नः सुखे न स्पृहा त्यागो रागे सर्वत्र शुभाशुभयोरनभिस्नेहो न द्वेष्टि न मोदं च ।।५७।। [परम०उ०]

"कक्षोपस्थलोमानि वर्जयेत् ।।५८।।" [कु०उ०९]

"कामक्रोधहर्षरोषलोभमोहदम्भदर्पासूयाममत्वाहंकारादीनपि त्यजेत् ।।५९।।" [आरु० उ० ४]

एकान्नं मधु मांसं वा ह्यात्मश्राद्धं तथैव च ।
अभोज्यानि यतीनाञ्च प्रत्यक्षलवणानि च ।।६०।।

[वायु पु० १८/१७]

संन्यस्याग्नीन्न पुनरावर्तयेन्मा मन्युं जायामावाहयेत् ।।६१।।

[का० ब्रा०]

ताम्बूलं तैजसं पात्रं रेतस्सेकं सिताम्बरम् ।
दिवास्वापो हि नक्तान्नं यतीनां षड् विवर्जिताः ।।६२।।
साक्षरा विपरीताश्च राक्षसास्त इति स्मृताः ।
तस्माद्वै विपरीतं च कर्म नैवाचरेद्यतिः ।।६३।।

[शि० पु० ६/२१/३४-३५]

न ग्राह्यं तैजसं पात्रं भिक्षुकेन कदाचन ।
वराटके संगृहीते तत्र तत्र दिने दिने ।।६४।।
गोसहस्रवधं पापं श्रुतिरेषा सनातनी ।
हृदि सस्नेहभावेन चेद्रक्षेत्स्त्रियमेकदा ।
कोटिद्वयं ब्रह्मकल्पं कुम्भीपाकी न संशयः ।।६५।।

[स्क० पु० का० ख० ४१/२५-२६]

एकान्नं मधु मांसं वा अमृतान्नं तथैव च ।
अभोज्यानि यतीनां तु प्रत्यक्षलवणानि च ।।६६।।

[लि॰पु॰ १/९०/२०-२०½]

कामः क्रोधस्तथा दर्पलोभमोहादयश्च ये ।
तांस्तु दोषान्परित्यज्य परिव्राड् निर्ममो भवेत् ।।६७।।

[ब्र॰पु॰ २२२/५३]

यतये काञ्चनं दत्त्वा ताम्बूलं ब्रह्मचारिणे ।
चौरेभ्योऽप्यभयं दत्त्वा दातापि नरकं व्रजेत् ।।६८।। [पराशर॰ १/५०]

संभाषणं सह स्त्रीभिरालम्भप्रेक्षणे तथा ।
नृत्यं गानं सभासेवां परिवादांश्च वर्जयेत् ।।६९।।
वानप्रस्थगृहस्थाभ्यां प्रीतिं यत्नेन वर्जयेत् ।
एकाकी विचरेन्नित्यं त्यक्त्वा सर्वपरिग्रहम् ।।७०।।

[विष्णु॰ ४/८-९]

देहः परमहंसानां न स्पर्शार्होऽपि कस्यचित् ।
विशेषतश्च नारीणां कामादिमलिनात्मनाम् ।।७१।। [अद्वैता॰ १/४०]

स्पृशेन्न किंचित्संन्यासी तं च नान्यो नरः स्पृशेत् ।
बाह्याभ्यन्तरशुद्धाढ्यो निवसेत्स्फटिकोपमः ।।७२।। [अद्वैता॰ १/४९]

न शिल्पजीविकां जीवेद्धिरण्यं नोत कामयेत् ।
न द्वेष्टा नोपदेष्टा च भवेच्च निरुपस्कृतः ।।७३।।
श्रद्धापूतानि भुञ्जीत निमित्तानि च वर्जयेत् ।
साधुवृत्तिरसक्तश्च सर्वभूतैरसंविदम् ।।७४।।
आशीर्युक्तानि सर्वाणि हिंसायुक्तानि यानि च ।
लोकसंग्रहधर्मं च नैव कुर्यान्न कारयेत् ।।७५।।

[महा॰आश्व॰ ४६/३७-३९]

अनागतं च न ध्यायेन्नातीतमनुचिन्तयेत् ।
वर्तमानमुपेक्षेत कालाकाङ्क्षी समाहितः ।।७६।।
न चक्षुषा न मनसा न वाचा दूषयेत् क्वचित् ।
न प्रत्यक्षं परोक्षं वा किंचिद् दुष्टं समाचरेत् ।।७७।।

[महा॰ आश्व॰ ४६/४२-४३]

असद्वादं न कुर्वीत वृत्त्यर्थं नाचरेत्कथाम् ।
असच्छास्त्रे न सक्तः स्यान्नोपजीवेच्च जीविकाम् ।।७८।।
सच्छास्त्रमभ्यसेच्चासौ बन्धमोक्षानुदर्शनम् ।
मठादीन्नैव बध्नीयादहन्ताममते त्यजेत् ।।७९।।
चातुर्मास्यं विनैकत्र वसेन्नाऽसावनापदि ।
आत्मनश्च हरे रूपं विद्याज्ज्ञानेन तत्त्वतः ।।८०।।
कामं क्रोधं भयं वैरं धनधान्यादिसङ्ग्रहम् ।
न कुर्यात्पालयेन्नैव यमांश्च नियमान्यतिः ।।८१।।
तीव्रज्ञानविरागाभ्यां सम्पन्नोऽपि यतिर्ध्रुवम् ।
स्त्रीवित्तभूषासद्वस्त्रसंसर्गाद् भ्रष्टतांव्रजेत् ।।८२।।
पुष्पचन्दनतैलादिसुगन्धिद्रव्यवर्जनम् ।
त्यागी कुर्वीताऽन्यथा तु भवेद्देहात्मधीः स वै ।।८३।।

[स्क०पु०वै०ख० वासु०मा०२३/२१-२६]

न श्राव्या ग्राम्यवार्ता च मोक्षसिद्धिमभीप्सता ।
नश्येद्यच्छ्रवणान्नृणां सद्यो विष्णुकथारुचिः ।।८४।।
अपि चित्रमयीं नारीं त्यागी नैक्षेत न स्पृशेत् ।
स्त्र्याकारदर्शनादेव भ्रष्टा भूरि तपस्विनः ।।८५।।

[स्क०पु०वै०ख० वा०मा०२३/२८-२९]

स्त्रीणां च स्त्रीषु सक्तानां प्रसङ्गो विष्णुचिन्तकैः ।
सर्वथैव परित्याज्यो भवेत्तद्ध्यानमन्यथा ।।८६।।
भगवन्तं वासुदेवं विनैकमितरः पुमान् ।
कोऽपि नास्त्येव यो नारीं समीक्ष्य न विमुह्यति ।।८७।।
यत्र स्थित्या मुहुः स्त्रीणां स्यातां शब्दश्रुतीक्षणे ।
त्यागी तत्र वसेन्नैव वसन्धर्मच्युतो भवेत् ।।८८।।
कामो लोभो रसास्वादः स्नेहो मानस्तथा च रुट् ।
एते त्याज्याः प्रयत्नेन षड्दोषाः संसृतिप्रदाः ।।८९।।
प्रोक्तेषु धर्मेष्वेतेषु यस्य यस्य च्युतिर्भवेत् ।
यथाशक्ति यथाशास्त्रं कार्या तत्तस्य निष्कृतिः ।।९०।।

[स्क०पु०वै०ख० वा०मा०२३/३६-४०]

आतिथ्यश्राद्धयज्ञेषु देवयात्रोत्सवेषु च ।
महाजनञ्च सिद्ध्यर्थं न गच्छेद्योगवित् क्वचित् ।।९१।।

[मा० पु० ४१/५]

न पाणिपादचपलो न नेत्रचपलो यतिः ।
न च वाक्चपलश्चैव ब्रह्मभूतो जितेन्द्रियः ।।९२।।

[याज्ञ० उ० १८]

द्वावेतौ समवीर्यौ तु सुरा ताम्बूलमेव च ।
तस्मात्सर्वप्रयत्नेन ताम्बूलं वर्जयेद्यतिः ।।९३।। [वायु पु०]
यतीनां काञ्चनं दत्त्वा ताम्बूलं ब्रह्मचारिणाम् ।
चौराणामभयं दत्त्वा दाताऽपि नरकं व्रजेत् ।।९४।।
यत्यन्नं न तु भोक्तव्यं प्राणैः कण्ठगतैरपि ।
गोमांससदृशं ज्ञेयं सुराबिन्दुसमं जलम् ।।९५।।
गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।
उत्पथप्रतिपन्नस्य परित्यागो विधीयते ।।९६।।
माद्यति प्रमदां दृष्ट्वा सुरां पीत्वा च माद्यति ।
तस्माद् दृष्टिमदां नारीं दूरतः परिवर्जयेत् ।।९७।।
भयान्न संत्यजेन्मार्गं भयाद्यतिर्विनश्यति ।
मोक्षं गच्छत्यसौ विप्रो निर्भयो यस्त्वसंग्रहः ।।९८।। [व्यास०]
छेदभेदोपमर्दं च प्राकारं गृहमाश्रमम् ।
स्वाहा स्वधा वषट्कारो विषयाणां च संनिधिः ।।९९।।
स्तुतिनिन्दाक्रियावादाः परधर्मावघट्टनम् ।
तृष्णा क्रोधाऽनृतं माया लोभमोहौ प्रियाप्रिये ।।१००।।
शिल्पं व्याख्यानियोगश्च कामो रागः परिग्रहः ।
अहंकारो ममत्वं च चिकित्सा धर्मसाहसम् ।।१०१।।
प्रायश्चित्तप्रदानं च मन्त्रौषध्यगदाशिषः ।
एकान्नं मदमात्सर्यं गन्धपुष्पविभूषणम् ।।१०२।।
ताम्बूलाभ्यञ्जने क्रीडा भोगाकाङ्क्षा रसायनम् ।
कत्थनं कुत्सनं स्वस्ति ज्योतिषं क्रयविक्रयौ ।।१०३।।

क्रियाकर्म विवादश्च गुरुवाक्यविलङ्घनम् ।
संधिश्च विग्रहो यानं मञ्चकः शुक्लवाससम् ।।१०४।।
शुक्रोत्सर्गो दिवास्वापो भिक्षाधारस्तु तैजसः ।
विषं चैवाऽऽयुधं बीजं हिंसा चेक्षादि मैथुनम् ।।१०५।।
प्रतिषिद्धानि चैतानि सेवमानो व्रजत्यधः ।
भैक्षदेशनृपज्ञातिपुत्रमित्रादियोषिताम् ।
उपचारकथास्वन्यमनसाऽपि न चिन्तयेत् ।।१०६।। [अत्रि०]
अर्थशय्यासनानां तु वाक्यस्पर्शनभाषणैः ।
याजनाध्यापनव्याख्यावस्त्रभाण्डपरिग्रहैः ।
मिथुनेक्षणसंकल्पैः संकराः स्युर्यतेः सदा ।।१०७।। [क्रतु०]
स्थावरं जङ्गमं बीजं तैजसं विषमायुधम् ।
षडेतानि न गृह्णीयाद्यतिर्मूत्रपुरीषवत् ।।१०८।।
रसायनक्रिया वादो ज्योतिषं क्रयविक्रयम् ।
विविधानि च शिल्पानि वर्जयेत्परदारवत् ।।१०९।।[मेधातिथि०]
भयं प्राणान्तिकं मुक्त्वा विण्मूत्रोत्सर्ग एव च ।
नान्यत्र विचरेद्रात्रौ न मध्याह्ने न संध्ययोः ।।११०।। [दक्ष०]
नैवाऽऽददीत पाथेयं यतिः किंचिदनापदि ।
पक्वमापत्सु गृह्णीयाद्यावदह्नोपभुज्यते ।।१११।।
पाथेयमेकरात्रस्य पानीयं दुर्गमे पथि ।
गृह्णीयान्नाधिकं चान्नं भेषजं तु यथेच्छया ।।११२।।
न चैकस्मिन्वसेद् ग्रामे न चैकस्मिन्सरित्तटे ।
शून्यागारे न चैकस्मिन्वसेच्छून्यालये तथा ।।११३।।
लोकयात्रां प्रयत्नेन वर्जयेदात्मचिन्तकः ।
नान्योपनिषदं विद्यामभ्यसेन्मुक्तिहेतुकीम् ।।११४।।
ग्रासादाच्छादनादन्यन्न गृह्णीयात्कथंचन ।
यावदाहारयेत्तावत्प्रतिगृह्णीत नान्यथा ।।११५।।

परार्थं न प्रतिग्राह्यं न च दद्यात्कथंचन ।
दैन्यभावात्तु भूतानां संविभागं यतिश्चरेत् ।।११६।। [अत्रि०]
नीरुजश्च युवा चैव भिक्षुर्नाऽऽवसथे वसेत् ।
स दूषयति तत्स्थानं वृद्धान्पीडयतीति च ।।११७।। [क्रतु०]
अन्नदानपरो भिक्षुर्वस्त्रादीनां परिग्रही ।
उभौ तौ मन्दबुद्धित्वात्पूतीनरकशायिनौ ।।११८।। [जाबाल०]
पक्वं वा यदि वाऽपक्वं पाचयेद्यः क्वचिद्यतिः ।
स्वधर्मस्य तु लोपेन तिर्यग्योनिं व्रजेद्यतिः ।।११९।। [अत्रि०]
यस्तु प्रव्रजितो भूत्वा पुनः सेवेत मैथुनम् ।
षष्टिवर्षसहस्राणि विष्ठायां जायते कृमिः ।।१२०।।
शून्यागारेषु घोरेषु आखुर्भवति दारुणः ।
स तिर्यक्स्यात्ततो गृध्रः श्वा वै द्वादश वत्सरान् ।।१२१।।
खरो विंशति वर्षाणि दश वर्षाणि सूकरः ।
अपुष्पोऽफलितो वृक्षो जायते कण्टकान्वितः ।।१२२।।
ततो दावाग्निना दग्धः स्थाणुर्भवति कामुकः ।
स्थावराच्च परिभ्रष्टो योनिमन्यां स गच्छति ।।१२३।।
पूर्णे वर्षसहस्रान्ते जायते ब्रह्मराक्षसः ।
क्षुत्पिपासापरिश्रान्तः क्रव्यादो रुधिराशनः ।।१२४।।
चाण्डालगर्भसंभूतो जायते नात्र संशयः ।
क्रमेण लभते मोक्षं कुलस्योत्सादनेन च ।।१२५।। [वायु पु०]
वसन्नावसथे भिक्षुर्मैथुनं यदि सेवते ।
तस्यावसथनाशः स्यात्कुलान्यपि हि कृन्तति ।।१२६।।[दक्ष० ७/४१]
छेदने भेदने पाके यतिर्यस्तु प्रवर्तते ।
तादृशं कश्मलं दृष्ट्वा प्रेताशौचं विधीयते ।।१२७।।
तिलधान्यहिरण्यं च गोभूदासीगृहादिकम् ।
तदादाय निषिद्धं तु योऽश्नुते तं त्यजेद्यतिः ।।१२८।।

स साधुभिर्बहिष्कार्यः स्मृतोऽसौ पतितो यतिः ।
तं दृष्ट्वा भिन्नमर्यादं स्नानं कुर्यात्सहाम्बरम् ।।१२९।। [हारीत०]
बालघ्नांश्च कृतघ्नांश्च विशुद्धानपि धर्मतः ।
शरणागतहन्तृंश्च स्त्रीहन्तृंश्च न संवदेत् ।।१३०।।
आविकं त्वधिकं वस्त्रं तूलीं तूलपटीं तथा ।
प्रतिगृह्य यतिश्चैतान्पतते नात्र संशयः ।।१३१।।
ऊर्णाकीटोद्भवं वस्त्रं कस्तूरी रोचनं तथा ।
वर्जनीयं प्रयत्नेन स्पृष्ट्वा चान्द्रायणं चरेत् ।।१३२।।
ग्राह्यं कार्पासजं वस्त्रं काषा (शा) युक्तमयाचितम् ।
अन्यद्वस्त्रं त्यजेद्योगी यदीच्छेदात्मनो हितम् ।।१३३।। [मनु]
पतत्यसौ ध्रुवं भिक्षुर्यस्य भिक्षोर्द्वयं भवेत् ।
धीपूर्वं रेत उत्सर्गो द्रव्यसंग्रह एव च ।।१३४।।
काञ्चनं च तिला गावो भूमिर्धान्यं धनं स्त्रियः ।
प्रतिगृह्य यतिश्चैतान्पतते नात्र संशयः ।।१३५।।
भूमिर्गावो हिरण्यं च यतेर्यस्य परिग्रहः ।
तादृशं कश्मलं दृष्ट्वा सचैलो जलमाविशेत् ।।१३६।।
अभयं सर्वभूतेभ्यो दत्त्वा यस्तु निवर्तते ।
हन्ति जातानजातांश्च प्रतिगृह्णाति यस्य च ।।१३७।।
दिवास्वप्नं च यानं च स्त्रीकथा लौल्यमेव च ।
मञ्चकः शुक्लवासश्च यतीनां पातनानि षट् ।।१३८।।
अन्नदानपरो भिक्षुश्चतुरो हन्ति दानतः ।
दातारमन्नमात्मानं यस्मै चान्नं प्रयच्छति ।।१३९।। [वस्वृच०]
माधूकरं समाहृत्य ब्राह्मणेभ्यो ददाति यः ।
स याति नरकं विप्रो भोक्ता चान्द्रायणं चरेत् ।।१४०।। [क्रतु०]
कार्पासोद्भवकाषायं वस्त्रं ग्राह्यमयाचितम् ।
कन्थाकौपीनवासस्तु तेन कार्यं न दुष्यति ।।१४१।।

अन्यद्वस्त्रं यदा लौल्याद् गृहीत्वोर्णापटादिकम् ।
तेन पापेन च यतिः स्वधर्मात्प्रच्युतो भवेत् ।।१४२।। [जाबाल०]
द्रव्यस्त्रीमांससंपर्कान्मधुमाक्षिकलेहनात् ।
विचारस्य परित्यागाद्यतिः पतनमृच्छति ।।१४३।। [कात्या०]
क्रोधलोभपरो नित्यं निद्रालस्यपरस्तथा ।
विषादीच्छापरश्चैव श्रेयसो भ्रश्यते द्विजः ।।१४४।। [व्यास०]
बीजघ्नं तैजसं पात्रं शुक्रोत्सर्गं सिताम्बरम् ।
निशान्नं च दिवास्वापं यतीनां पातनानि षट् ।।१४५।।
दासीदासं गृहं यानं गोभूधान्यधनं रसान् ।
प्रतिगृह्य यतिर्ग्रामं हन्यात्कुलशतत्रयम् ।।१४६।।
आविकं पट्टिकां मांसं तूलिकां मञ्चकं मधु ।
शुक्लवस्त्रं च यानं च ताम्बूलं स्त्रियमेव च ।।१४७।।
प्रतिगृह्य कुलं हन्यात्प्रतिगृह्णाति यस्य च ।
पुष्पं शाखां पल्लवं वा फलमूलतृणादिकम् ।।१४८।।
भुक्त्वा च यस्तु संन्यासी नरके पततित ध्रुवम् ।
यः स्वधर्मं परित्यज्य यदन्यत्कुरुते द्विजः ।
न तस्य निष्कृतिः कार्या स्वधर्मात्प्रच्युतो हि सः ।।"१४९। [क्रतु०]
ऊर्णा केशोद्भवा ज्ञेया मलकीटोद्भवः पटः ।
कस्तूरीं रोचनं रक्तं वर्जयेदात्मवान्यतिः ।।१५०।।
हिंसोद्भवं पट्टकूलं कस्तूरी रोचनं तथा ।
प्राण्यङ्गं च तथोर्णा च यतीनां पतनं ध्रुवम् ।।१५१।।
वस्त्रं कार्पासजं ग्राह्यं काषा (शा) युक्तमयाचितम् ।
अन्यद्वस्त्रादिकं सर्वं त्यजेन्मूत्रपुरीषवत् ।।१५२।।
ऊर्णा तु रोमसंभूता कृमेर्मलयुतं पटः ।
कस्तूरी रोचनं रक्तं प्राण्यङ्गमस्थिसंनिभम् ।।१५३।।
एतान्स्पृष्ट्वा प्रमादेन स्वधर्माच्च्यवते यतिः ।
सापेक्षेण यदा लौल्याद्ग्रहणं नरको ध्रुवः ।।१५४।। [कात्या०]

आरूढपतितो हन्ति दश पूर्वान्दशापरान् ।
निस्तारयति तानेव यदि सम्यग्व्यवस्थितः ।।१५५।।
क्षेत्रं गावो हिरण्यं च यतेर्यस्य परिग्रहः ।
तादृशं कश्मलं दृष्ट्वा सचैलो जलमाविशेत् ।।१५६।।
विधवां कञ्चुकोपेतां सधवां कञ्चुकं विना ।
यतिं च कञ्चुकोपेतं दृष्ट्वा चक्षुर्निमीलयेत् ।।१५७।।
चत्वारि पतनीयानि यतीनां मनुरब्रवीत् ।
औषधं संनिधानं च एकान्नं कांस्यभोजनम् ।।१५८।।
एकान्नी द्विव्रती चैव भेषजी वस्तुसंग्रही ।
चत्वारो नरकं यान्ति मनुः स्वायंभुवोऽब्रवीत् ।।१५९।। [अङ्गिरा०]
चित्रवस्त्रं तु न ग्राह्यमपि कार्पाससंभवम् ।
तथा कीटोद्भवं चीर्णं त्यजेच्छुनकसंघवत् ।।१६०।।
न रक्तमुल्बणं वासो न नीलं च प्रशस्यते ।
मलाक्तं च दशाहीनं वर्जयेदम्बरं यतिः ।।१६१।।
मधु मांसं च मद्यं च ताम्बूलं तैलमौषधम् ।
वर्ज्यान्यष्टौ यतेर्दूरात्तथा कान्ता च काञ्चनम् ।।१६२।।
चिकित्सकस्य मृगयाशल्यहर्तुश्च पाशिनः ।
कुलटाषण्डयोरन्नमुद्यतं संत्यजेद्यतिः ।।१६३।।
द्वावेवाश्रमिणौ भोज्यौ वानप्रस्थो गृही तथा ।
अभोज्यमन्नमन्येषां सर्वेषामपि लिङ्गिनाम् ।।१६४।। [अत्रि०]
यानमारोहणं कृत्वा गृहीत्वा गृहिणो धनम् ।
गृहं कृत्वा गृही स्यात्स्वधर्मात्पतितो भवेत् ।।१६५।।
कृत्वा च कृषिवाणिज्यं कुवृत्तिं कुरुते च यः ।
स संन्यासी हृताचारः स्वधर्मात्पतितो भवेत् ।।१६६।।

[ब्र० वै० पु० ४/८३/९१-९२]

वृद्धानामातुराणां च भीरूणां संगवर्जिनाम् ।
ग्रामे वाऽपि पुरे वाऽपि वासो नैकत्र दुष्यति ।।१६७।।

[विष्णु० ४/६]

न ज्ञानिनां कुले भिक्षेन्न चेश्वरगृहे क्वचित् ।
न शिष्यबन्धुमित्रादीन् भिक्षां लिप्सेत कर्हिचित् ।।१६८।।
नाश्नन्ति पितरो देवा नाश्नन्ति वृषलीपतेः ।
स्त्रीजितस्यापि नाश्नन्ति तदन्नं वर्जयेद्यतिः ।।१६९।।
वर्णानामाश्रमाणां च स्वधर्मो वीरसंज्ञकः ।
ते तु तस्मिन्प्रवर्तन्ते ते वीरा विप्रकीर्तिताः ।।१७०।।
यस्तं लोपयते धर्मं तं वीरघ्नं यतिस्त्यजेत् ।।१७१।।
अथ दिग्वाससीं कन्यां गर्भिणीं मलिनां तथा ।
प्रमत्तां रुदितां क्रुद्धामन्नं भोक्तुं समुद्यताम् ।।१७२।।
गर्भभर्त्तृद्रुहां नैव स्वैरिणीं कामचारिणीम् ।
अवीरां कुष्ठिनीं चान्धां पुनर्भूं कृत्रिमां तथा ।। १७३।।
मुक्तकेशीं सुखासीनां सुरागां विस्मयान्विताम् ।
शठां दीनां दुराचारां सखेदां व्याधिपीडिताम् ।।१७४।।
निर्लज्जां बन्धकीं श्रान्तां प्रेष्यां क्लीबां सुनिष्ठुराम् ।
भिक्षां भिक्षुर्न भिक्षेत पाययन्तीं स्तनं शिशुम् ।।१७५।।

[अत्रि०]

"रजस्वलाप्रयुक्तां नग्नवधूहस्तगतां तथाऽवज्ञोपहतां कुमार्यानीतां भिक्षां न याचेन्न गृह्णीयात् । कुटुम्बसङ्कटं सोपरोधं वा गृहं न प्रविशेत् । सुप्तां भुक्तां प्रमत्तां प्रमुदितां सखेदां सुखासीनामन्तर्वत्नीं व्याधितां सरागामन्नं भोक्तुमुद्यतां बाललग्नस्तनां भिक्षां न याचेत ।।"१७६।। [कपिल०]

"प्रत्यक्षं लवणं मांसं मधुशावकशौनिकम् ।
मूर्खाभिशप्तपतितक्लीबान्धानि च वर्जयेत् ।।
अधीरां स्वैरिणीं कुष्ठीं गर्भभर्त्तृद्रुहामपि ।
कन्यां धात्रीं पुनर्भूं च नग्नां भिक्षेत न क्वचित् ।।१७७।। [क्रतु०]
शरणं न कुर्यात् न च कारयेत् न तीर्थलोलुपः ।।१७८।।" [शौनक०]
कामक्रोधादिकान्दोषान्वर्जयेद्यावदायुषम् ।
एवं स वर्तयन्नित्यं ब्रह्म सम्पद्यते यतिः ।।१७९।।

[कात्या०]

लोकयात्राः प्रयत्नेन वर्जयेदात्मचिन्तकः ।
नानोपनिषदो यत्नादभ्यसेन्मुक्तिहेतवे ।।१८०।। [व्यास०]
नानध्यात्मग्रन्थरतिर्न च ज्योतिषिको भवेत् ।
न व्याधिभूतवैतालांश्चिकित्सेद्धर्मतोऽपि च ।।१८१।।
न शिष्यसंग्रहं कुर्यान्न स्वविद्यां प्रकाशयेत् ।
संस्कृतां न वदेद्वाणीं बालवन्मूकवच्चरेत् ।।१८२।।"

[लिखित०]

"स्वस्त्याशिषं वर्जयेत् शरणं न कुर्यान्न कारयेत् ।
दिवा स्रवन्त्या महारुचितं प्रभूतोदकं पुण्यस्थानं न त्यजेत् ।
न लोलुपो नेतिहासपुराणव्याख्यानपरः ।।१८३।। [कपिल०]
"आतिथ्यं श्राद्धयज्ञेषु देवयात्रोत्सवादिषु ।
कुतूहलेषु सर्वेषु न गच्छेद्यतिरात्मवान् ।।"१८४।।

[वृद्ध जा०]

पुष्पमूलपाटनाग्रच्छेदनमधुमांसदानादानानि वर्जयेत् ।।१८५।। (वृद्धव०)

"नटादिप्रेक्षणं द्यूतं प्रमदां सुहृदस्तथा ।
भक्ष्यं भोज्यमुदक्यां च षण्ण पश्येत्पुरीषवत् ।।१८६।।
स्कन्धावारे पुरे सौधे खले गोष्ठे ह्यसद्गृहे ।
न वसेत यतिः षट्सु स्थानेष्वेतेषु कर्हिचित् ।।१८७।।
रात्र्यध्वानं च यानं च स्त्रीकथा लौल्यमेव च ।
मञ्चकं शुक्लवस्त्रं च यतीनां पतनानि षट् ।।१८८।।
रागद्वेषौ मदं मानं दम्भं द्रोहं परात्मसु ।
षडेतानि यतिर्नित्यं मनसापि न चिन्तयेत् ।।१८९।।
आसनं पात्रलोपश्च संचयः शिष्यसंग्रहः ।
दिवास्वापो वृथाजल्पो यतेर्बन्धकराणि षट् ।।"१९०।।

[मेधातिथि०]

"धान्यवृक्षलतावल्लीः स्थावरं जङ्गमं तथा ।
उत्पाटयेद्यो मूढात्मा नरकं प्रतिपद्यते ।।१९१।।

ताम्बूलाभ्यञ्जने चैव कांस्यपात्रे च भोजनम् ।
यतिश्च ब्रह्मचारी च विधवा च विवर्जयेत् ।।१९२।।
द्व एते समवीर्ये यत्सुरा ताम्बूलमेव च ।
तस्मात्सर्वप्रयत्नेन ताम्बूलं वर्जयेद्यतिः ।।१९३।।[जमदग्नि०]

"न स्वगुणं कीर्तयेत् । त्रासितोऽपि न कुप्येत् । पूजितोऽपि न मुदं व्रजेत् । त्रिषवणं स्नानमाचरेत् । तथा न लज्जयेत् । न नदीं बाहुभ्यां तरेत् । मृत्युं जीवितं वा न काङ्क्षेत् । रात्रौ न चरेत् । ताम्बूलभक्षणं वर्जयेत् । असङ्गं च द्विरन्नं च न लिप्सेत् । आतिथ्यश्राद्धयज्ञेषु देवयात्रोत्सवेषु न गच्छेत् । सार्थसमवायेषु वानप्रस्थगृहिभ्यां प्रीतिं च वर्जयेत्"।।१९४।।

[शौनक०]

"न क्वचिन्निशि भुञ्जीत भुक्त्वा भुञ्जीत नो पुनः।
भुञ्जानो निशि संन्यासी पतत्येव न संशयः ।।१९५।।
अन्यकाले तु सम्प्राप्ते निशि भुञ्जीत यो यतिः।
उपस्थानं च जप्यं च प्राणायामो बलिस्तथा ।
सर्वे ते निष्फलास्तस्य प्रायश्चितं विधीयते ।।१९६।।[वृद्धजा०]
"नैवाददीत पाथेयं यतिर्वै यदनापदि ।
पक्वमापत्सु गृह्णीयाद्यावदह्नोपयुज्यते ।।१९७।। [वृहस्पति०]
भैक्षदेशं नृपज्ञातिपुत्रमित्रादि योषितः ।
उपकारकथाश्चैव मनसापि न चिन्तयेत् ।।१९८।।
आगच्छ गच्छ तिष्ठेति स्वागतं सुहृदं प्रति ।
सन्मानमपि न ब्रूयान्मुनिर्मोक्षपरायणः ।।१९९।। [यम०]
सर्वधर्मान्परित्यज्य यतिधर्मं समाचरेत् ।
यतिधर्मात्परिभ्रष्टो न धर्मफलमश्नुते ।।२००।। [गर्ग०]

*

# यतेरसाधारणधर्माः

भैक्षाशनं च मौनित्वं तपो ध्यानं विशेषतः ।

[कू० पु० १/२/४४-४४½]

सम्यग्ज्ञानं च वैराग्यं धर्मोऽयं भिक्षुके मतः ।।१।।

[ना०प०उ० ५/३३]

निर्वैरेण समं पश्यन्द्विजगोऽश्वमृगादिषु ।
भावयन्मनसा विष्णुं परमात्मानमीश्वरम् ।।२।।

चिन्मयं परमानन्दं ब्रह्मैवाहमिति स्मरन् ज्ञात्वैवं मनोदण्डं धृत्वा आशानिवृत्तो भूत्वा आशाम्बरधरो भूत्वा सर्वदा मनोवाक्कायकर्मभिः सर्वसंसारमुत्सृज्य प्रपञ्चावाङ्मुखः स्वरूपानुसंधानेन भ्रमरकीटन्यायेन मुक्तो भवति ।।३।।

[ना० प० उ० ५/३८-३९]

अव्यक्तलिङ्गोऽव्यक्तार्थो मुनिरुन्मत्तबालवत् ।
कविर्मूकवदात्मानं तद्दृष्ट्या दर्शयेन्नृणाम् ।।४।।
न कुर्यान्न वदेत्किञ्चिन्न ध्यायेत्साध्वसाधु वा ।
आत्मारामोऽनया वृत्त्या विचरेज्जडवन्मुनिः ।।५।।

[ना० प० उ० ५/२३-२४]

प्रपञ्चमखिलं यस्तु ज्ञानाग्नौ जुहुयाद्यतिः ।
आत्मन्यग्नीन्समारोप्य सोऽग्निहोत्री महायतिः ।।६।।
नापृष्टः कस्यचिद्ब्रूयान्न चान्यायेन पृच्छतः ।
जानन्नपि हि मेधावी जडवल्लोक आचरेत् ।।७।।

[सं० उ० २/१००,१०२]

यस्त्वात्मरतिरेव स्यान्नित्यतृप्तो महामुनिः ।
सम्यग्दर्शनसम्पन्नः स योगी भिक्षुरुच्यते ।।८।।

[कू०पु० १/२/८३-८३१/२]

कपालं वृक्षमूलं च कुचैलमसहायता ।
समता चैव सर्वस्मिन्नेतन्मुक्तस्य लक्षणम् ।।९।।

[आग्ने० पु० १६१/४-४१/२]

सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि ।
अवेक्ष्य चात्मनात्मानं ब्रह्मभूयाय कल्पते ।।१०।।

[कू०पु० १/६२/२९७]

निरालम्बं यदा ध्यानं कुर्वाणो निश्चलो भवेत् ।
तदा तदुच्यते ब्रह्म स योगी ब्रह्मवित्तमः ।।११।।

[वृहत्पारा० १२/२९१]

भूतानामात्मभूतस्य तानि सम्यक् प्रपश्यतः ।
विमुह्यन्त्यमरा मार्गपदं किमपदस्य तु ।। १२।।

[वृहत्पारा० १२/२९३]

यस्तु सर्वाणि भूतानि पश्यत्यात्मगतानि तु ।
आत्मानं तेषु सर्वेषु ततो यो न विरज्यते ।।१३।।
सर्वभूतात्मभूतात्मा यत्र पश्यति धीमतिः ।
शोकमोहौ च किं तस्य ह्येकत्वमनुपश्यतः ।। १४।।

[वृहत्पारा० १२/२९६-२९७]

आत्मज्ञानं हि यो वेत्ति स सर्वज्ञः स सर्वकृत् ।
एवं ज्ञात्वा प्रयत्नेन योगयुक्तः सदा भवेत् ।।१५।।

[ वृहद्योगि० ११/४]

ब्रह्मचारी गृहस्थो वा वानप्रस्थो यतिस्तथा ।
आत्मज्ञानेन मुच्यन्ते यत्र तत्राऽऽश्रमे रताः ।।१६।।

[वृहद्योगि० ११/४४]

स्वप्नेऽपि योऽभियुक्तश्च जाग्रच्चैव विशेषतः ।
ईदृक्चेष्टः स्मृतः श्रेष्ठो वरिष्ठो ब्रह्मवादिनाम् ।।१७।। [दक्ष० ४/१०]
नाध्येतव्यं न वक्तव्यं न श्रोतव्यं कदाचन ।
एतैः सर्वैस्तु संपन्नो यतिर्भवति नेतरः ।।१८।। [दक्ष० ४/३२]
अव्यक्तलिङ्गो व्यक्ताचारः अनुन्मत्त उन्मत्तवेषः ।।१९।।

[वसिष्ठ० ४/१२]

कपालं वृक्षमूलानि कुचैलमसहायता ।
उपेक्षा सर्वभूतानामेतावद् भिक्षुलक्षणम् ।।२०।।

[महा० शा० २४५/७) (पद्मपु० १/१५/३६३]

अपादपाणिपृष्ठं तदशिरष्कमनूदरम् ।
प्रहीणगुणकर्माणं केवलं विमलं स्थिरम् ।।२१।।
अगन्धमरसस्पर्शमरूपाशब्दमेव च ।
अनुगम्यमनासक्तममांसमपि चैव यत् ।।२२।।
निश्चिन्तमव्ययं दिव्यं कूटस्थमपि सर्वदा ।
सर्वभूतस्थमात्मानं ये पश्यन्ति न ते मृताः ।।२३।।
न तत्र क्रमते बुद्धिर्नेन्द्रियाणि न देवताः ।
वेदा यज्ञाश्च लोकाश्च न तपो न व्रतानि च ।।२४।।
यत्र ज्ञानवतां प्राप्तिरलिङ्गग्रहणा स्मृता ।
तस्मादलिङ्गधर्मज्ञो धर्मतत्त्वमुपाचरेत् ।।२५।।
गूढधर्माश्रितो विद्वान् विज्ञानचरितं चरेत् ।
अमूढो मूढरूपेण चरेद् धर्ममदूषयंन् ।।२६।।
तथैनमवमन्येरन् परे सततमेव हि ।
यथावृत्तश्चरेच्छान्तः सतां धर्मानकुत्सयन् ।
य एवं वृत्तसम्पन्नः स मुनिश्रेष्ठ उच्यते ।।२७।।

[महा०आश्व० ४६/४७-५३½]

लिङ्गेऽसत्यपि खल्वस्मिञ्ज्ञानमेव हि कारणम् ।
निर्मोक्षायेह भूतानां लिङ्गग्रामो निरर्थकः ।।२८।।
तस्मादलिङ्गो धर्मज्ञो ब्रह्मन्ब्रह्मण्यनुव्रतः ।
लिङ्गाभावात्तु कैवल्यमिति हि श्रुतिशासनम् ।।२९।। [व्यास०]
गूढधर्माश्रितो विद्वानज्ञातचरितं चरेत् ।
संदिग्धः सर्वभूतानां वर्णाश्रमविवर्जितः ।।३०।।
अन्धवज्जडवच्चापि मूकवच्च महीं चरेत् ।
संदिग्धः सर्वभूतानां लिङ्गाश्रमविवर्जितः ।।३१।।
तं दृष्ट्वा शान्तमनसं स्पृहयन्ति दिवौकसः ।
वर्णाश्रमाणां धर्मो हि देवस्थानेषु कारणम् ।।३२।।
लिङ्गाभावात्तु कैवल्यमिति ब्रह्मानुशासनम् ।
मोक्षधर्मेषु निरतो लघ्वाहारो जितेन्द्रियः ।।३३।।

संप्राप्तो ब्रह्मणः स्थानं यत्परं प्रकृतेर्ध्रुवम् ।
वीततृष्णं निरानन्दं निराशं निष्परिग्रहम् ।।३४।।
सर्वतः सुखमभ्येति जलानीव महोदधिम् ।
नात्यक्त्वा सुखमाप्नोति नात्यक्त्वा विन्दते परम् ।।३५।।
नात्यक्त्वा वाऽभयं शेते सर्वं त्यक्त्वा सुखी भवेत् ।
आत्मचिन्ताविनोदेन शौचक्रीडनकेन च ।।३६।।
सर्वभूतसमत्वेन योगः सिद्ध्यति नान्यथा ।
आत्मानन्दश्च सततमात्मन्येव समाहितः ।।३७।।
रतश्चैव सुतृप्तश्च योगः सिद्ध्यति नान्यथा ।
स्वप्नेऽपि यो हि युक्तः स्याज्जाग्रतीव विशेषतः ।
ईदृक्चेष्टः स्मृतः श्रेष्ठो वरिष्ठो ब्रह्मवादिनाम् ।।३८।।

[पितामह०]

नैव धर्मी न चाधर्मी न चापीह शुभाशुभी ।
भिक्षाशी सर्ववर्णेषु तुल्यनिन्दास्तुतिः क्षमी ।।३९।।
निस्तरङ्गवदम्भोधिस्थिरधीः सर्वदाऽऽत्मवान् ।
समः सर्वेषु भूतेषु परहंसः स उच्यते ।।४०।।
अरोषमोहः समलोष्टकांचनः
प्रहीणशोको गतसंधिविग्रहः ।
अपेतनिन्दास्तुतिरप्रियप्रिय-
श्चरन्नुदासीनवदेव भिक्षुः ।। ४१।।

[पद्मपु० १/१५/३९२]

*

## स्त्र्यादीनां कुत्सनम्

मांसपाञ्चालिकायास्तु यन्त्रलोलेऽङ्गपञ्जरे ।
स्नाय्वस्थिमज्जाशालिन्यः स्त्रियः किमिव शोभनम् ।।१।।
त्वङ्मांसरक्तबाष्पाम्बु पृथक्कृत्वा विलोचने ।
समालोकय रम्यं चेत्किं मुधा परिमुह्यसि ।।२।।
मेरुशृङ्गतटोल्लासिगङ्गाजलरयोपमा ।
दृष्टा यस्मिन्मुने मुक्ताहारस्योल्लासशालिता ।।३।।
श्मशानेषु दिगन्तेषु स एव ललनास्तनः ।
श्वभिरास्वाद्यते काले लघुपिण्ड इवान्धसः ।।४।।
केशकज्जलधारिण्यो दुःस्पर्शा लोचनप्रियाः ।
दुष्कृताग्निशिखा नार्यो दहन्ति तृणवन्नरम् ।।५।।
ज्वलना अतिदूरेऽपि सरसा अपि नीरसाः ।
स्त्रियो हि नरकाग्नीनामिन्धनं चारुदारुणम् ।।६।।
कामनाम्ना किरातेन विकीर्णा मुग्धचेतसाम् ।
नार्यो नरविहङ्गानामङ्गबन्धनवागुराः ।।७।।
जन्मपल्वलमत्स्यानां चित्तकर्दमचारिणाम् ।
पुंसां दुर्वासनारज्जुर्नारी बडिशपिण्डिका ।।८।।
सर्वेषां दोषरत्नानां सुसमुद्गिकयाऽनया ।
दुःखशृङ्खलया नित्यमलमस्तु मम स्त्रिया ।।९।।
यस्य स्त्री तस्य भोगेच्छा निःस्त्रीकस्य क्व भोगभूः ।
स्त्रियं त्यक्त्वा जगत्त्यक्तं जगत्त्यक्त्वा सुखी भवेत् ।।१०।।

[याज्ञ० उ० ५-१४]

त्वङ्मांसरुधिरस्नायुमज्जामेदोऽस्थिसंहतौ ।
विण्मूत्रपूये रमतां क्रिमीणां कियदन्तरम् ।।११।।
क्व शरीरमशेषाणां श्लेष्मादीनां महाचयः ।
क्व चाङ्गशोभासौभाग्यकमनीयादयो गुणाः ।।१२।।
मांसासृक्पूयविण्मूत्रस्नायुमज्जास्थिसंहतौ ।
देहे चेत्प्रीतिमान्मूढो भविता नरकेऽपि सः ।।१३।।

स्त्रीणामवाच्यदेशस्य क्लिन्ननाडीव्रणस्य च ।
अभेदेऽपि मनोभेदाज्जनः प्रायेण वञ्च्यते ।।१४।।
चर्मखण्डं द्विधा भिन्नमपानोद्गारधूपितम् ।
ये रमन्ति नमस्तेभ्यः साहसं किमतः परम् ।।१५।।

[ना०प०उ० ४/२६-३०]

मैथुनस्य परित्यागो ब्रह्मचर्यं तदष्टधा ।
स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम् ।।१६।।
संकल्पोऽध्यवसायश्च क्रियानिर्वृतिरेव च ।
एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः ।।१७।।
ब्रह्मचर्यं क्रियामूलमन्यथा विफलाः क्रियाः ।
वसिष्ठश्चन्द्रमाः शक्रो देवाचार्यः पितामहः ।।१८।।
तपोवृद्धा वयोवृद्धास्तेऽपि स्त्रीभिर्विमोहिताः ।
गौडी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा ।।१९।।
चतुर्थी स्त्रीसुरा ज्ञेया ययेदं मोहितं जगत् ।
माद्यति प्रमदां दृष्ट्वा सुरां पीत्वा च माद्यति ।
तस्माद्दृष्टिमदा नारी तस्मात्तां नावलोकयेत् ।।२०।।

[आग्ने० पु० ३९/९-१३-१/२]

स्त्रीणां निरीक्षणं स्पर्शं भाषणं क्रीडनादि च ।
वर्जयेत्सर्वथा वर्णी स्त्रियाश्चाप्यवलेखनम् ।।२१।।
विना न देवप्रतिमां काष्ठचित्रादि योषिताम् ।
अपि नैव स्पृशेद्धीमान्न चं बुद्ध्याऽवलोकयेत् ।।२२।।
प्राणिमात्रञ्च मिथुनीभूतं नेक्षेत कर्हिचित् ।
स्त्रीणां गुणांश्चाऽप्यगुणाञ्छृणुयान्नैव नो वदेत् ।।२३।।

[स्क० पु० वै० वा०मा० २१/१२-१४]

पदापि युवतीं भिक्षुर्न स्पृशेद्दारवीमपि ।
इति वृद्धोक्तयः सन्ति तत्कुतः स्यात्सहस्थितिः ।।२४।।
निर्भृष्टघृतमप्याज्यपात्रं संनिधिमूष्मणः ।
प्राप्य द्रवत्येव तथा योषितां सन्निधौ यतिः ।।२५।।
जिताहारोऽथवा वृद्धो विरक्तो व्यथितोऽथवा ।
यतिर्न गच्छेत्तं देशं यत्र स्यात्प्रतिमा स्त्रियाः ।।२६।।

विषवल्लीमरुद्विंध्ये बाधते प्राणिनं यथा ।
योषित्स्पर्शी तथा वायुर्बाधते मस्करीश्वरम् ।।२७।।
संभाषणावलोकादि दूरे तिष्ठतु योषिताम् ।
अहिदंशस्मृतिरिव स्मृतिस्तासां मृतिप्रदा ।।२८।।
योषिन्मूला बुधैः प्रोक्ता सर्वेऽनर्थाः शरीरिणाम् ।
अपि ब्रह्मेन्द्रचन्द्रादिदेवानां का कथा नृणाम् ।।२९।।
अपि राज्यं नरकवत्स्वर्णं पश्येच्च लोष्टवत् ।
स्त्रियं कुणपवत्पश्येद्यस्तादृग्दुर्लभो यतिः ।।३०।।

[अद्वैता० १/२१-२७]

दोषदर्शी भवेत्तत्र यत्र रागः प्रवर्तते ।
अनिष्टवर्द्धितं पश्येत्ततः क्षिप्रं विरज्यते ।।३१।।
यदि नामास्य कायस्य यदन्तस्तद्बहिर्भवेत् ।
दण्डमुद्यम्य लोकोऽयं शुनः काकांश्च वारयेत् ।।३२।।
यान्येव मलवाहीनि पूतिच्छिद्राणि योषिताम् ।
तान्येव खलु काम्यानि अहो पुंसां विडम्बना ।।३३।।
चर्मखण्डं द्विधा भिन्नमपानोद्गारधूपितम् ।
ये रमन्ति नमस्तेभ्यः साहसं किमतः परम् ।।३४।।[विष्णु०]
स्त्रीणां स्त्रीसङ्गिनां सङ्गं त्यक्त्वा दूरत आत्मवान् ।
क्षेमे विविक्त आसीनश्चिन्तयेन्मामतन्द्रितः ।।३५।।
न तथास्य भवेत् क्लेशो बन्धश्चान्यप्रसङ्गतः ।
योषित्सङ्गाद् यथा पुंसो यथा तत्सङ्गिसङ्गतः ।।३६।।

[श्रीमद्भा० ११/१४/२९-३०]

पदापि युवतीं भिक्षुर्न स्पृशेद् दारवीमपि ।
स्पृशन् करीव बध्येत करिण्या अङ्गसङ्गतः ।।३७।।
नाधिगच्छेत् स्त्रियं प्राज्ञः कर्हिचिन्मृत्युमात्मनः ।
बलाधिकैः स हन्येत गजैरन्यैर्गजो यथा ।।३८।।

[श्रीमद्भा० ११/८/१३-१४]

ग्राम्यगीतं न शृणुयाद् यतिर्वनचरः क्वचित् ।
शिक्षेत हरिणाद् बद्धान्मृगयोर्गीतमोहितात् ।।३९।।

नृत्यवादित्रगीतानि जुषन् ग्राम्याणि योषिताम् ।
आसां क्रीडनको वश्य ऋष्यशृङ्गो मृगीसुतः ।।४०।।

[श्रीमद्भा० ११/८/१७-१८]

दृष्ट्वा स्त्रियं देवमायां तद्भावैरजितेन्द्रियः ।
प्रलोभितः पतत्यन्धे तमस्यग्नौ पतङ्गवत् ।।४१।।
योषिद्धिरण्याभरणाम्बरादिद्रव्येषु मायारचितेषु मूढः ।
प्रलोभितात्मा ह्युपभोगबुद्ध्या पतङ्गवन्नश्यति नष्टदृष्टिः ।।४२।।

[श्रीमद्भा० ११/८/७-८]

किं विद्यया किं तपसा किं त्यागेन श्रुतेन वा ।
किं विविक्तेन मौनेन स्त्रीभिर्यस्य मनो हृतम् ।।४३।।
क्वायं मलीमसः कायो दौर्गन्ध्याद्यात्मकोऽशुचिः ।
क्व गुणाः सौमनस्याद्या ह्यध्यासोऽविद्यया कृतः ।।४४।।
पित्रोः किं स्वं नु भार्यायाः स्वामिनोऽग्नेः श्वगृध्रयोः ।
किमात्मनः किं सुहृदामिति यो नावसीयते ।।४५।।
तस्मिन् कलेवरेऽमेध्ये तुच्छनिष्ठे विषज्जते ।
अहो सुभद्रं सुनसं सुस्मितं च मुखं स्त्रियाः ।।४६।।
त्वङ्मांसरुधिरस्नायुमेदोमज्जास्थिसंहतौ ।
विण्मूत्रपूये रमतां कृमीणां कियदन्तरम् ।।४७।।
अथापि नोपसज्जेत स्त्रीषु स्त्रैणेषु चार्थवित् ।
विषयेन्द्रियसंयोगान्मनः क्षुभ्यति नान्यथा ।।४८।।
अदृष्टादश्रुताद् भावान्न भाव उपजायते ।
असम्प्रयुञ्जतः प्राणान् शाम्यति स्तिमितं मनः ।।४९।।
तस्मात् सङ्गो न कर्तव्यः स्त्रीषु स्त्रैणेषु चेन्द्रियैः ।
विदुषां चाप्यविश्रब्धः षड्वर्गः किमु मादृशाम् ।।५०।।

[श्रीमद्भा० ११/२६/१२,१८-२४]

अनृतं साहसं माया मूर्खत्वमतिलोभता ।
अशौचत्वं निर्दयत्वं स्त्रीणां दोषाः स्वभावजाः ।।५१।।
स्त्रीणां नैव तु विश्वासं दुष्टानां कारयेद्बुधः ।
विश्वासे यः स्थितो मूढः स दुःखैः परिभूयते ।।५२।।
सुधामयं वचो यासां कामिनां रसवर्धनम् ।
हृदयं क्षुरधाराभं प्रियः को नाम योषिताम् ।।५३।।

अधीत्य वेदशास्त्राणि संसारे रागिणश्च ये ।
तेभ्यः परो न मूर्खोऽस्ति सधर्माः श्वाऽश्वसूकरैः ।।५४।।
मानुष्यं दुर्लभं प्राप्य वेदशास्त्राण्यधीत्य च ।
बध्यते यदि संसारे को विमुच्येत मानवः ।।५५।। [श्रीमद्देवी०]
अन्तकश्शमनो मृत्युः पातालं वडवामुखम् ।
क्षुरधारा विषं सर्पो वह्निरित्येकतः स्त्रियः ।।५६।। [शि० पु०]
स्त्रियः सदा परित्याज्याः स्त्रीसङ्गं न च कारयेत् ।
कुणपेषु यथा चित्तं तथा कुर्याद्विचक्षणः ।।५७।।
भोगेन तृप्तिर्नैवास्ति विषयाणां विचारतः ।
तस्माद्विरागः कर्तव्यो मनसा कर्मणा गिरा ।।५८।।
अविरक्तो यतो मर्त्यो नाना योनिषु वर्तते ।।५९।।[लि० पु०]
आत्मनः क्षेममन्विच्छंश्चतुर्थाश्रममागतः ।
न कुर्याद्योषितां सङ्गं मनसा वपुषेन्द्रियैः ।।६०।।
विलीयते घृतं यद्वदग्नेः संसर्गतस्तथा ।
नारीसंसर्गतः पुंसो धैर्यं नश्यति सर्वथा ।।६१।।
एक एव प्रतीकारो नारीसर्पविषे भुवि ।
आसाञ्च स्मरणं तद्वद्दर्शनादेश्च वर्जनम् ।।६२।। [आ० पु०]
न संभाषेत्स्त्रियं कांचित्पूर्वदृष्टां च न स्मरेत् ।
कथां च वर्जयेत्तासां न पश्येल्लिखितामपि ।।६३।।
एतच्चतुष्टयं मोहात्स्त्रीणामाचरतो यतेः ।
चित्तं विक्रियतेऽवश्यं तद्विकारात्प्रणश्यति ।।६४।।
[ना० प० उ० ४/३-४)

श्रुतिस्मृतिपुराणेषु सङ्गः स्त्रीणां निवारितः ।
यत्सङ्गात्संक्षयं याति पुमानग्निगतो यथा ।।६५।।
[आदिपु० ५/२६-२७]

रचिता देवमायेयं विमोहाय नृणामिह ।।६६।।
[आदिपु० ५/२६-२७]

अहो जनानां मोहोऽयं स्वविनाशं न पश्यताम् ।
सङ्गो भवति योषित्सु पतङ्गानामिवाग्निषु ।।६७।।

अहो आभिः किं न कृतमनिष्टं पुरुषेष्विह ।
याभिर्वशं समानीताः खरा इव नराधमाः ।।६८।।

[आदिपु० ५/३०-३१]

सुजीर्णोऽपि सुजीर्णासु विद्वान्स्त्रीषु न विश्वसेत् ।
सुजीर्णास्वपि कन्थासु सज्जते जीर्णमम्बरम् ।।६९।।

[मं० उ० २/९०]

वासना यत्र यस्य स्यात्स तं स्वप्नेषु पश्यति ।
स्पप्नवन्मरणे ज्ञेयं वासनातो वपुर्नृणाम् ।।७०।।
कामिनां कामिनीनां च सङ्गात्कामी भवेत्पुमान् ।
देहान्तरे ततः क्रोधी लोभी मोही च जायते ।।७१।।
कामक्रोधादिसंसर्गादशुद्धं जायते मनः ।
अशुद्धे मनसि ब्रह्मज्ञानं तच्च विनश्यति ।।७२।।
कामक्रोधादिसंसक्तो ब्रह्मज्ञानविवर्जितः।
मार्गद्वयपरिभ्रष्टस्तृतीयं मार्गमाव्रजेत् ।।७३।।
तृतीयेऽध्वनि संप्राप्तः पुण्यविद्याविवर्जितः ।
कीटादिदेहभागी सन्नरकाच्च न निःसरेत् ।।७४।।
श्रेयस्कामस्ततो नित्यं चतुर्थाश्रममागतः ।
कामिनां कामिनीनां च सङ्गं सर्वात्मना त्यजेत् ।।७५।। [आ० पु०]
यस्तु प्रव्रजितो भूत्वा पुनः सेवेत्तु मैथुनम् ।
षष्टिवर्षसहस्राणि विष्ठायां जायते कृमिः ।।७६।। [लघुशाता०]
विषयासक्तचित्तो हि यतिर्मोक्षं न विन्दति ।
यत्नेन विषयासक्तिं तस्माद्योगी विवर्जयेत् ।।७७।।
सङ्गं त्यजेत मिथुनव्रतिनां मुमुक्षुः
सर्वात्मना न विसृजेद् बहिरिन्द्रियाणि ।
एकश्चरन् रहसि चित्तमनन्त ईशे
युञ्जीत तद्व्रतिषु साधुषु चेत् प्रसङ्गः ।।७८।। [श्रीमद्भा०]
तपोमार्गार्गलां शश्वन्मुक्तिद्वारकपाटिकाम् ।
हरेर्भक्तिव्यवहितां सर्वमायाकरण्डिकाम् ।।७९।।

संसारकारागारे च शश्वन्निगडरूपिणीम् ।
इन्द्रजालस्वरूपां च मिथ्या च स्वप्नरूपिणीम् ।।८०।।
विभ्रतीं बाह्यसौन्दर्यं मध्याङ्गमतिकुत्सितम् ।
नानाविण्मूत्रपूयानामाधारं मलसंयुतम् ।
दुर्गन्धिदोषसंयुक्तं रक्ताक्तं चाप्यसंस्कृतम् ।।८१।।
मायारूपं मायिनां च विधिना निर्मितं पुरा ।
विषरूपां मुमूक्षूणामदृश्यां चैव सर्वदा ।।८२।।[श्रीमद्देवी०]
नारीरूपं त्रिभुवने मुक्तिमार्गनिरोधकम् ।
व्यवधानं तपस्यायाः सततं मोहकारणम् ।।८३।।
उरोमुखं स्तनं स्त्रीणां हास्यं कटाक्षमेव च ।
विनाशबीजं रूपं च विपदां कारणं सदा ।।८४।।

[ब्र० वै० पु० ४/७५/२१]

स्त्रियो मूलमनर्थानां सर्वेषां प्राणिनां भुवि ।
तस्मात्त्याज्याः सुदूरेण ताः स्वर्गस्य निरोधिकाः ।।८५।।

[स्क० पु० ना० ख० ४४/९]

पत्तनं साहसानां च नरकस्यैव कारणम् ।
योनिकुण्डमिदं सृष्टं कुम्भीपाकसमं भुवि ।।८६।।
नेत्ररज्ज्वा दृढं बद्ध्वा धर्षयन्ति मनस्विनः ।
कुचरूपैर्महादण्डैस्ताड्यमानमचेतसम् ।।८७।।
कृत्वा वै यातयन्त्याशु नरकं नृपसत्तम ।
मोहनं सर्वभूतानां नारी चैव विनिर्मिता ।।८८।।
तावद्धत्त मनः स्थैर्यं श्रुतं सत्यमनाकुलम् ।
यावन्मत्ताङ्गनाग्रे न वागुरेव सुचेतसाम् ।।८९।।
तावत्तपोभिवृद्धिस्तु तावद्दानं दया दमः ।
तावत्स्वाध्यायवृत्तं च तावच्छौचं धृतं व्रतम् ।।९०।।

यावत्त्रस्तमृगीदृष्टिं चपलां न विलोकयेत् ।
तावन्माता पिता तावद् भ्राता तावत्सुहृज्जनः ।
तावल्लज्जा भयं तावत्स्वाचारस्तावदेव हि ।।९१।।
ज्ञानमौदार्यमैश्वर्यं तावदेव हि भासते ।
यावन्मत्ताङ्गनापाशैः पातितो नैव बन्धनैः ।।९२।।

[स्क० पु० क्र० ख० ३/८१-८७]

नराणां बुद्धिकवलं कुर्वन्ति सततं हि ताः ।
तावद्विद्या प्रभवति तावज्ज्ञानं प्रवर्तते ।।९३।।
तावत्सुनिर्मला मेधा सर्वशास्त्रविधारिणी ।
तावज्जपस्तपस्तावत्तावत्तीर्थनिषेवणम् ।।९४।।
तावच्च गुरुशुश्रूषा तावद्वितरणे मतिः ।
तावत्प्रबोधो भवति विवेकस्तावदेव हि ।।९५।।
तावत्सतां सङ्गरुचिस्तावत्पौराणलालसा ।
यावत्सीमन्तिनीलोलनयनान्दोलनं न हि ।।९६।।

[पद्मपु० ३/६१/१५-१८]

विवेकिनोऽपि मुनयस्तावदेव विवेकिनः ।
यावन्न हरिणाक्षीणामपाङ्गैरभिलक्षिताः ।।९७।।

[स्क० पु० कु० ख० ५/६७]

अर्गलं ज्ञानमार्गस्य भक्तिद्वारकपाटकम् ।
मोक्षमार्गव्यवहितं चिरं बन्धनकारणम् ।।९८।।
पीयूषबुद्ध्या गरलं भुंक्ते पापी नराधमः।
परं नारायणं त्यक्त्वा यस्यास्ते विषये मनः ।
स वंचितो मायया चामृतं त्यक्त्वा विषं भजेत् ।।९९।।[ब्र० वै० पु०]
किं तज्जपेन तपसा मौनेन च व्रतेन च ।
सुरार्चनेन तीर्थेन स्त्रीभिर्यस्य मनो हृतम् ।।१००।।
स्त्रीरूपं निर्मितं सृष्टौ मोहाय कामिनां मनः ।
अन्यथा न भवेत्सृष्टिः स्रष्ट्रा तेन पुराज्ञया ।।१०१।।
सर्वं मायाकरण्डश्च धर्ममार्गार्गलं नृणाम् ।
व्यवधानं च तपसां दोषाणामाश्रयं परम् ।।१०२।।

कर्मबन्धनिबन्धानां निगडं कठिनं स्मृतम् ।
प्रदीपरूपं कीटानां मीनानां वडिशं यथा ।।१०३।।
विषकुम्भं दुग्धमुखमारम्भे मधुरोपमम् ।
परिणामे दुःखबीजं सोपानं नरकस्य च ।।१०४।।

[ब्र० वै०पु० ४/६१/३५-३९]

स्मरणाज्जायते कामो वधूनां धैर्यनाशनः ।
दर्शनाद्वचनात्स्पर्शात्कस्मादेष न संभवेत् ।।१०५।।
दर्शनाद्धरते चित्तं स्पर्शनाद्धरते बलम् ।
मैथुनाद्धरते वीर्यं नारी प्रत्यक्षराक्षसी ।।१०६।।
चर्मखण्डं द्विधा भिन्नमपानोद्गारवासितम् ।
तत्र मूढा रमन्ते ये प्राणैरपि धनैरपि ।
ते यान्ति नरकं घोरं सत्यमेव न संशयः ।।१०७।।
मनसा कर्मणा वाचा त्यज्यतां मृगलोचनाः ।
न ते स्वर्गोऽपवर्गो वा सानन्दं हृदयं यदि ।।१०८।।
न जानामि कथं तेन निर्मिता मृगलोचना ।
विश्वासघातकीं विद्धि स्वर्गमोक्षसुखार्गलाम् ।।१०९।।
मूत्रशोणितदुर्गन्धे ह्यमेध्यद्वारदूषिते ।
चर्मकुण्डे ये रमन्ति ते लिप्यन्ते न संशयः ।।११०।।
त्रैलोक्यजननी धात्री सा भगी नरकं ध्रुवम् ।
तस्यां जातो रतस्तत्र हा हा संसारिणः स्थितिः ।।१११।।
जानामि नरकं नारीं ध्रुवं जानामि बन्धनम् ।
यस्यां जातो रतस्तत्र पुनस्तत्रैव धावति ।।११२।।
भगादिकुचपर्यन्तं संविद्धिनरकार्णवम् ।
ये रमन्ति पुनस्तत्र तरन्ति नरकं कथम् ।।११३।।
विष्ठादि नरकं घोरं भगं च परिनिर्मितम् ।
किमु पश्यसि रे चित्त कथं तत्रैव धावसि ।।११४।।
भगेन चर्मकुण्डेन दुर्गन्धेन व्रणेन च ।
खण्डितं हि जगत्सर्वं सदेवासुरमानुषम् ।।११५।।
देहार्णवे महाघोरे पूरितं चैव शोणितम् ।
केनऽपि निर्मिता नारी भगं चैव ह्यधोमुखम् ।।११६।।

अन्तरे नरकं विद्धि कौटिल्यं बाह्यमण्डितम् ।
ललितामिह पश्यन्ति महामन्त्रविरोधिनीम् ।।११७।।
अज्ञात्वा जीवितं लब्धं भवस्तत्रैव देहिनाम् ।
अहो जातो रतस्तत्र अहो भवविडम्बना ।।११८।।
तत्र मुग्धा रमन्ते च सदेवासुरमानवाः ।
ते यान्ति नरकं घोरं सत्यमेव न संशयः ।।११९।।
अग्निकुंण्डसमा नारी घृतकुम्भसमो नरः ।
संसर्गेण विलीयेत तस्मात्तां परिवर्जयेत् ।।१२०।।
मद्यपानं महापापं नारीसङ्गस्तथैव च ।
तस्माद्द्वयं परित्यज्य तत्त्वनिष्ठो भवेन्मुनिः ।।१२१।।[अव० गी०]

प्रीत्यार्जितं सर्वसुखं विनश्वरं
दुःखप्रदं कामिनिभोगसेवितम् ।
एवं विदित्वा न धृतो हि योगो ।
वृथा गतं तस्य नरस्य जीवितम् ।।१२२।।
मायाकरण्डी नरकस्य हण्डी
तपोविखण्डी सुकृतस्य भण्डी ।
नृणां विखण्डी चिरसेविता चेद्
वृथा गतं तस्य नरस्य जीवितम् ।।१२३।।
समाधिहन्त्री जनमोहयित्री
धर्मे कुमन्त्री कपटस्य तन्त्री ।
सत्कर्महंत्री कलिता च येन
वृथा गतं तस्य नरस्य जीवितम् ।। १२४।।
चिन्ताव्यथादुःखमयी सदोषा
संसारपाशा जनमोहकर्त्री ।
संतापकोशा भजिता च येन
वृथा गतं तस्य नरस्य जीवितम् ।।१२५।।
कापट्यवेषा जनवञ्चिका सा
विण्मूत्रदुर्गन्धदरी दुराशा ।
संसेविता येन सदा मलाढ्या
वृथा गतं तस्य नरस्य जीवितम् ।।१२६।।

अशौचदेहा पतितस्वभावा
वपुःप्रगल्भा बललोभशीला ।
मृषावदन्ती कलिता च येन
वृथा गतं तस्य नरस्य जीवितम् ।।१२७।।

संसारसद्भावनभक्तिहीना
चित्तस्य चोरा हृदि निर्दया च ।
विहाय योगं कलिता नरेण
वृथा गतं तस्य नरस्य जीवितम् ।।१२८।।

यत्र जाता रतास्तत्र ये पीतास्ते च मर्दिता ।
अहो लोकस्य मूर्खत्वं वैराग्यं नैव जायते ।। १२९।।

अमेध्यपूयक्रिमिजन्तुसंकुले
स्वभावदुर्गन्धिनि शौचवर्जिते ।
कलेवरे मूत्रपुरीषभाजने
रमन्ति मूढा विरमन्ति पण्डिताः ।।१३०।।

सङ्गं न कुर्यात्प्रमदासु जातु
योगस्य पारं परमारुरुक्षुः ।
मत्सेवया प्रतिलब्धात्मलाभो
वदन्ति या निरयद्वारमस्य ।।१३१ ।।

अविद्वांसमलं लोके विद्वांसमपि वा पुनः ।
प्रमदा ह्युत्पथं नेतुं कामक्रोधवशानुगम् ।।१३२ ।।

स्त्रिया तनोति संसारः स्त्रीत्यागाज्जगतः क्षयः ।
स्त्रियं त्यक्त्वा जगत्त्यक्तं जगत्त्यक्त्वा सुखी भव ।।१३३।।

विरमत बुधा योषित्संगात्सुखात्क्षणभङ्गुरा -
त्कुरुत करुणामैत्रीप्रज्ञावधूजनसङ्गमम् ।
न खलु नरके हाराक्रान्तं घनस्तनमण्डलं
शरणमथवा श्रोणीबिम्बं रणन्मणिमेखलम् ।।१३४।।

धन्यास्त एव तरलायतलोचनानां -
तारुण्यरूपघनपीनपयोधराणाम् ।
क्षामोदरोपरिलसत्त्रिवलीलतानां
दृष्ट्वाकृतिं विकृतिमेति मनो न येषाम् ।।१३५।।

कान्ताकटाक्षविशिखा न लुनन्ति यस्य
चित्तं न निर्दहति कोपकृशानुतापः ।
कर्षन्ति भूरिविषयाश्च न लोभपाशै –
र्लोकत्रयं जयति कृत्स्नमिदं स धीरः ।।१३६।।

## प्रायश्चित्तानि

यत्यन्नं यतिपात्रस्थं यतिना प्रेरितं च यत् ।
अन्नत्रयं न भोक्तव्यं भुक्त्वा चान्द्रायणं चरेत् ।।१।। [जावाल०]
ज्ञातीनां तु कुले भिक्षुर्न भिक्षेत कदाचन ।
आचरेत यदा भिक्षां तदा चान्द्रायणं चरेत् ।।२।। [अत्रि०]
यदि पर्युषितं भैक्षमद्याद्भिक्षुः कथंचन ।
तदा चान्द्रायणं कुर्याद्यतिः शुद्ध्यर्थमात्मनः ।।३।।
भिक्षुर्द्विर्भोजनं कुर्यात्कदाचिज्ज्ञानदुर्बलः ।
स्वस्थावस्थो यदा लौल्यात्तदा चान्द्रायणं चरेत् ।।४।। [यम०]
संन्यासं कुरुते यस्तु श्राद्धं तस्य विधीयते ।
तस्यान्नं नैव भोक्तव्यं भुक्त्वा चान्द्रायणं चरेत् ।।५।। [जावाल०]
भर्तृहीना तु या नारी स्वतन्त्रा बन्धुवर्जिता ।
तदन्नं नैव भोक्तव्यं भुक्त्वा चान्द्रायणं चरेत् ।।६।।
स्वधर्मात्प्रच्युता ये वै पुरुषा योषितोऽपि वा ।
अवीरास्ते सदा ज्ञेया नित्यं सद्भिर्विगर्हिताः ।।७।। [क्रतु०]
आहारग्रहणे रात्रौ प्राणायामा दश स्मृताः ।
जलस्य ग्रहणे रात्रौ प्राणायामस्तथैव च ।।८।।
भुक्तशेषं न कुर्वीत प्रमादात्कुरुते यदि ।
प्रतिग्रासं तदा कुर्यात्त्रींस्त्रीन्प्राण यमान्यतिः ।।९।। [जमदग्निः]
दृष्टं भ्रूणघ्नपाखण्डैः कुष्ठ्यादिभिरुदक्यया ।
श्वषण्डकाकचाण्डालैरन्त्यैरन्त्यावसायिभिः ।।१०।।

एतान्पश्यन्न भुञ्जीत भुक्त्वा चान्द्रायणं चरेत् ।
पतितान्नं सकृद्भुक्त्वा प्रायश्चित्ती भवेद्यतिः ।
तप्तकृच्छ्रत्रयं कृत्वा शुध्यते नात्र संशयः ।।११।। [देवल०]
स्वस्थावस्थो यदा भुङ्क्ते पुनराहृत्य तद्दिने ।
अन्यग्रामेऽथवा तस्मिंस्तप्तकृच्छ्रं समाचरेत् ।।१२।।
अशक्तः प्राणरक्षार्थं पुनर्मूलफलादिकम् ।
भक्षयेन्नैव दुष्येत भेषजं दन्तधावनम् ।।१३।।
यथा न पीड्यते कायो नैवान्तकवशं व्रजेत् ।
तथा धर्मं चरेद्भिक्षुः पश्यन्वै शास्त्रचक्षुषा ।।१४।।
एकान्नं मधु मांसं च अन्नं विष्ठादिदूषितम् ।
हन्तकारं च नैवेद्यं प्रत्यक्षं लवणं तथा ।
एतान्भुक्त्वा यतिर्मोहात्प्राजापत्यं समाचरेत् ।।१५।। [जावाल०]
निषिद्धान्नं यदाऽश्नीयादनुज्ञा यत्र नास्ति वै ।
अतिकृच्छ्रं तदा भिक्षुः कुर्याच्छुद्ध्यर्थमात्मनः ।।१६।। [अत्रि०]
मठेष्वभोज्यमन्नं स्याद्भुक्त्वा चान्द्रायणं चरेत् ।
स्पृष्ट्वा मठपतिं चैव सवासा जलमाविशेत् ।।१७।। [पद्मपु०]
मत्स्यमांसादिबहुलं यद्गृहे पच्यते भृशम् ।
तद्गृहं वर्जयेद्भिक्षुर्यदि भिक्षां समाचरेत् ।।१८।।
द्वादशांस्तु यमान्कृत्वा ततः पापात्प्रमुच्यते ।
एकान्नं तु त्र्यहं भुक्त्वा निरन्तरमनापदि ।
प्राणायामशतं कुर्याच्छुद्ध्यर्थं यतिरात्मवान् ।।१९।। [विश्वामित्र०]
मूलाङ्कुरेषु पत्रेषु पुष्पेषु च फलेषु च ।
स्थावराणां चोपमर्दे प्राणायामास्त्रयस्त्रयः ।।२०।।
धान्यं वृक्षं लतां यस्तु स्थावरं जङ्गमं तथा ।
उत्पाटयति मूढात्मा अवीचीनरकं व्रजेत् ।।२१।।
अकामादपि हिंसेत पशून्मृगादिकान्यतिः ।
कृच्छ्रातिकृच्छ्रौ कुर्वीत चान्द्रायणमथापि वा ।।२२।। [जमदग्नि०]

स्वर्णं च रजतं ताम्रं तैजसं यच्च किंचन ।
स्पृष्ट्वा परिव्राट् शूद्रं च सवासा जलमाविशेत् ।
द्रव्यं तु मुद्रितं स्पृष्ट्वा त्रिरात्रेण शुचिर्भवेत् ।।२३।। [वस्त्रच०]
स्वप्ने स्त्रीसङ्गभोगेन स्नात्वा त्रिसहस्रं जपेत् ।
कण्डूयनेन क्षरण उपवासस्तदाऽऽचरेत् ।।२४।। [कपिल०]
स्वप्नस्कन्ने दुर्बलत्वात्प्राणायामास्तु षोडश ।
रेतःसेकं क्वचिद्भिक्षुः कुर्यान्मोहात्तु कामतः ।।२५।।
प्राजापत्यत्रयं कृत्वा प्राणायामशतं चरेत् ।
स्वभावतो दिवास्कन्ने प्राजापत्यं समाचरेत् ।।२६।।
स्त्रियं दृष्ट्वा यदा स्वप्ने रेतः क्षरति वै क्वचित् ।
सवासाऽऽप्लुत्य शुद्ध्यर्थं कुर्यात्षोडश संयमान् ।।२७।।
उपवासं यतिः कुर्यात्पुनः सुप्तः क्षरेद्यदि ।
प्राणायामैर्विशुद्धात्मा विरजो जायते पुनः ।।२८।। [देवल०]
गुरुवचनातिक्रमे च स्वधर्मातिक्रमे च पूर्णचान्द्रायणं चरेत् ।
वर्षाकाले विना विघ्नं शरणं संत्यजेद्यदि ।।२९।।
शुद्ध्यर्थं तु तदा कुर्यात्कृच्छ्रं वा शतसंयमान् ।
प्रतिक्रोशं चरेत्कृच्छ्रं लोभमोहादिना त्यजेत् ।।३०।।
[हारीत०]
दण्डग्रहणं कृत्वा पुत्रमित्रभ्रात्रादिसंभाषणं न कुर्यात् ।
अज्ञानाद्भाषणं कृत्वा प्रायश्चित्तेन युज्यते ।
एकं कृत्वा तूपवासं प्राणायामशतं चरेत् ।।३१।।

तद्गृहं गच्छति स्वजने रागं करोति भिक्षां गृह्णाति प्राजापत्यव्रतं कृत्वा प्राणायामशतं चरेत् । तं दृष्ट्वा दुःखं करोत्यश्रु पातयन्प्रायश्चित्तेन युज्यते। उपवासत्रयं कृत्वा प्राणायामशतं चरेत् ॥३२॥ [सत्य०]

पूर्वसंभोगं न स्मरेत् । प्रमादात्स्मरणादाचम्य प्राणायामत्रयं कृत्वा पुनराचमेत् । स्वप्नसंभोगे स्नात्वा त्रिसहस्रं जपेत् ॥३३॥ [कपिल०]

तिलधान्यसुवर्णानि गोभूयानगृहादिकम् ।
दासीदासं रसं गन्धं याचितायाचितं तु यत् ।।३४।।
हृदि शोकं पुरा कृत्वा तत्सर्वं तु परित्यजेत् ।
संत्यज्य सर्वं द्रव्यं तु चरेच्चान्द्रायणं यतिः ।। ३५।। [अत्रि०]

संन्यासी यो हि भूत्वा तु हिरण्यं संग्रहेद्यदि ।
तस्य दर्शनमात्रेण सचैलो जलमाविशेत् ।।३६।।
द्रव्यादानं यतिर्यो वै प्रकरोति नराधमः ।
पच्यते नरके घोरे यावदाभूतसंप्लवम् ।।३७।।
अद्वैतभावमाश्रित्य द्वैताचारेण वर्तति ।
रुदन्ति पितरस्तस्य हा कष्टं पतितं पुनः ।। ३८।।
लब्धं द्रव्यं परित्यज्य उपवासत्रयं चरेत् ।
प्राणायामशतं कृत्वा त्वयुतं जपमाचरेत् ।।३९।।
सामर्थ्ये शिबिकामश्वं गजं वृषभमेव च ।
शकटं वा रथं वाऽपि समारुह्य च कामतः ।।४०।।
व्रतं सांतपनं कुर्यात्प्राणायामशतान्वितम् ।
असामर्थ्ये समारुह्य यानं पूर्वोदितं पुनः ।
कृच्छ्रैकं शोधनं तत्र प्राणायामांस्त्वकामतः ।।४१।। [वायु पु०]
मूत्रोत्सर्गं तु यः कृत्वा अकृत्वा शौचमात्मनः ।
मोहाद्भुक्त्वा त्रिरात्रं स गव्यं पीत्वा विशुध्यति ।।४२।। [मा०पु०]
।। गव्यं घृतम् ।।
व्रतानि यानि भिक्षूणां तथैवोपव्रतानि च ।
एकैकातिक्रमे तेषां प्रायश्चित्तं विधीयते ।।४३।।
अहोरात्रोषितो भूत्वा कृच्छ्रं चान्द्रायणं चरेत् ।
यस्माज्ज्ञानात्तथा ध्यानान्नान्यद्भिक्षोस्तु शोधनम् ।।४४।।
तस्मात्तानि सदा कुर्याद्यतिः शुद्ध्यर्थमात्मनः ।
उपपातकिनो भिक्षोर्लघ्वाहारो जपस्ततः ।।४५।।
मौनं कालत्रये स्नानं विहितानि विशेषतः ।
सहस्राणि यमान्कुर्यात्प्रणवस्यायुतं जपेत् ।।४६।।
अरण्ये व्रतमेतत्तु कृत्वा भिक्षुर्विशुध्यति ।
महापातकजाद्दोषाद्विशुद्ध्यर्थं सदा यतिः ।।४७।।
त्रिलक्षं तु जपेद्योगी प्राणायामायुतं तथा ।
ततः शतसहस्रं तु प्रणवानां जपेद्यतिः ।।४८।।

स्त्रीसंभोगे सकृन्मोहाद्विधिनाऽनेन शुध्यति ।।४९।।

[छागलेय०]

कण्डूयनक्षरण उपवासः । चिन्तने त्रिरात्रम् । मधुमांसास्वादने च सकृत्स्त्रीगमने च द्वादशरात्रमुपवासयेत् । त्रिलक्षं जपेत् ॥५०॥ [कपिल०]

स्कन्न इन्द्रियदौर्बल्यात्स्त्रियं दृष्ट्वा यतिर्यदि ।
तेन धारयितव्या वै प्राणायामास्तु षोडश ।
इच्छया यदि तां पश्येत्प्राणायामास्तु षोडश ।।५१।।
रात्रौ तु क्षरणे स्नात्वा द्वादशैव तु धारयेत् ।
स्वप्नसेके प्रबुद्धश्च मृद्भिर्द्वादशभिर्यतिः ।।५२।।
शौचं कृत्वा विशुध्येत षोडशप्राणसंयमैः ।
रात्रिशेषे यदा स्वप्ने रेतो मूत्रं च वापयेत् ।।५३।।
स्नानं कृत्वा विशुध्येत षोडशप्राणसंयमैः ।
पुनः प्रसङ्गे सुप्तस्य द्विगुणं तु विधीयते ।।५४।।
स्कन्ने ज्ञाते तु सुप्तश्चेदुपवासस्तदा भवेत् ।
आलिङ्गनादिषु स्कन्ने वियोगे चेन्द्रियैर्यदा ।।५५।।
कृच्छ्रार्धेन जपेल्लक्षं ततः शुद्धिमियाद्यतिः ।
क्षौरं मेढ्रप्रदेशे तु कृत्वा कृच्छ्रं समाचरेत् ।
प्राणायामशतं कृत्वा तस्माद्भिक्षुर्विशुध्यति ।।५६।। [दत्तात्रेय०]

अदण्डो नैव तिष्ठेत यतिः कुत्रचिदात्मवान् ।
यदि तिष्ठेत्प्रतिदिनं प्राणायामशतं चरेत् ।।५७।।
दण्डात्मनस्तु चाण्डालैर्व्यवधानेन भिक्षुकः ।
प्राणायामशतं कुर्यान्मात्राभेदे तथैव च ।।५८।।
शूद्रेण व्यवधाने तु प्राणायामांस्तु षोडश ।
द्वादशाष्टौ च चत्वारि विट्क्षत्रियद्विजोत्तमैः ।।५९।।
जलान्तरादिक्षिप्तेषु न कश्चिद्दोषभाग्भवेत् ।
भग्नदण्डादिकं चैव जलेऽगाधे क्षिपेद्यतिः ।।६०।।
मद्यमूत्रपुरीषैश्च शुक्रकीलालशोणितैः ।
स्पृष्टं दण्डं त्यजेद्भिक्षुः शेषैः संस्कारमर्हति ।।६१।।

प्रातःस्नानं विना कामात्प्राणायामशतं चरेत् ।
एवमेव तु सायाह्ने मध्याह्ने तु सहस्रकम् ।।६२।।
प्रेतश्राद्धे यतिर्भुक्त्वा चरेच्चान्द्रायणत्रयम् ।
पितृस्थानं विनाऽन्यत्र श्राद्धं भुक्त्वा तदेव तु ।। ६३।।
एकश्चेत्पैतृके स्थाने द्वितीयो वैश्वदेवके ।
श्राद्धदिने विना श्राद्धं भुक्त्वा सांतपनं चरेत् ।।६४।।
बहुभोज्ये यतिर्भुक्त्वा कुर्यादितद्व्रतं पुनः ।
वाग्दण्डो हन्ति वै ज्ञानं मनोदण्डः परां गतिम् ।।६५।।
कर्मदण्डस्तु त्रीँल्लोकान्हन्यादपरिरक्षितः ।
वाग्दण्डे मौनमातिष्ठेत्कर्मदण्डे त्वभोजनम् ।
मानसे तु कृते दण्डे प्राणायामो विधीयते ।।६६।। [वायु पु०]

एकस्मिन्निमित्ते गुरुलघुप्रायश्चित्तविधानं तु विद्वदविद्वत्सु बुद्धिपूर्वाबुद्धिपूर्वप्रसज्याप्रसज्यादिविभागतो द्रष्टव्यम् । तत्रापि मन्दमध्यमोत्तमाधिकारिभिरवशीकृतचित्तैः कृच्छ्रचान्द्रायणप्रणवजपप्राणायामादयः कार्याः । वशीकृतचित्तैस्तु ध्यानमेव कार्यम् ।।

उक्तं च –

"प्रायश्चित्तेषु सर्वेषु यतेर्ध्यानं विशिष्यते ।
प्रणवस्य जपो वाऽथ मूलमन्त्रस्य संस्मृतिः ।।६७।।
प्राधान्यं श्रूयते श्रुत्या प्रणवस्य जपादिषु ।
तस्मात्सर्वप्रयत्नेन प्रणवैकपरो भवेत् ।।६८।।
जपाज्ज्ञानात्तथा ध्यानान्नान्यद्भिक्षोस्तु शोधनम् ।
तस्मात्तानि सदा कुर्याद्यतिः शुद्ध्यर्थमात्मनः ।।६९।।
ध्यानेन सदृशं नास्ति शोधनं पापकर्मणाम् ।
श्वपाकेष्वपि भुञ्जानो ध्यानेनेह विशुध्यति ।।७०।।
ध्यानमेव परं ब्रह्म ध्यानमेव परं तपः ।
ध्यानमेव परं शौचं ध्यानमेव परं पदम् ।।७१।।
सर्वपापप्रसक्तोऽपि ध्यायन्नेव प्रमुच्यते ।
तपस्वी च भवेदेवं पङ्क्तिपावनपावकः ।।७२।।

कृष्णानुस्मरणादेव पापसंघातपञ्जरम् ।
शतधा भेदमायाति गिरिर्वज्रहतो यथा ।।७३।।
यथाऽग्निरुद्धतशिखः कक्षं दहति सानिलः ।
तथा चित्तस्थितो विष्णुर्नराणां सर्वकिल्विषम् ।।७४।।
यथा विष्णोः स्मृतेः सद्यः संक्षयं याति पातकम् ।
तथा तन्नाशमभ्येति यद् दुःखं व्याधितो भवेत् ।।७५।।
ज्ञानह्रदे ध्यानजले रागद्वेषमलापहे ।
यः स्नाति मानसे तीर्थे स याति परमां गतिम् ।।७६।।
कलिकल्मषमत्युग्रं नरकार्तिप्रदं नृणाम् ।
प्रयाति विलयं सद्यः सकृद्विष्णोर्हि संस्मृतिः ।।७७।।
पक्षोपवासाद्यत्पापं पुरुषस्य प्रणश्यति ।
प्राणायामशतेनापि तत्पापं नश्यते नृणाम् ।।७८।।
प्राणायामसहस्रेण यत्पापं नश्यते नृणाम् ।
क्षणमात्रेण तत्पापं हरेर्ध्यानाद्विनश्यति ।।७९।।

[वृद्धशाता०]

उपपातकेषु सर्वेषु पातकेषु महत्सु च ।
प्रविश्य रजनीपादं ब्रह्मध्यानं समाचरेत् ।।८०।।
ब्रह्महत्यासहस्राणि अगम्यागमनानि च ।
एकेन ध्यानयोगेन नश्यन्त्यन्यान्यपि क्षणात् ।।८१।।
यदि स्यात्पातकं किंचिद्योगी कुर्यात्प्रमादतः ।
योगमेव निषेवेत नान्यं यत्नं कदाचन ।।८२।। [अत्रि०]
प्रायश्चित्तान्यशेषाणि तपःकर्मात्मकानि वै ।
यानि तेषामशेषाणां कृष्णानुस्मरणं परम् ।।८३।।
प्रातर्निशि तथा संध्यामध्याह्नादिषु संस्मरन् ।
नारायणमवाप्नोति सद्यः पापक्षयान्नरः ।।८४।। [वि०पु०]
अश्वमेधसहस्रैस्तु वाजपेयशतैरपि ।
यत्पापं विलयं याति स्मृते नश्यति तद्धरौ ।।८५।।
गङ्गास्नानसहस्रैश्च पुष्करस्नानकोटिभिः ।
यत्पापं विलयं याति स्मृते नश्यति तद्धरौ ।।८६।।

गृहस्थोक्तानि पापानि भवन्त्याश्रमिणो यदि ।
शौचवच्छोधनं तेषां प्राक्च ब्रह्मनिदर्शनात् ।।८७।।
ज्ञानिनः सेवनाच्छुद्धिर्ज्ञानस्येति न संशयः ।
भिद्यते शोकमोहादि च्छिद्यन्ते सर्वसंशयाः ।।८८।।
क्षीयन्ते चास्य कर्माणि ज्ञाते ब्रह्मणि तद्विदः ।
सर्वमन्यत्परित्यज्य यस्तु ब्रह्मणि वर्तते ।।८९।।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ।
यद्बाल्ये यच्च कौमारे यत्पापं यौवने कृतम् ।।
तत्पापमखिलं क्षिप्रं स्मृते विष्णौ प्रणश्यति ।।९०।।

[यति० समु०]

अपि चेदसि पापेभ्यः सर्वेभ्यः पापकृत्तमः ।
सर्वं ज्ञानप्लवेनैव वृजिनं संतरिष्यसि ।।९१।।

[श्रीमद्भ०४/३६]

भूतात्मनस्तपोविद्ये बुद्धेर्ज्ञानं विशोधनम् ।
क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमा मता ।।९२।। [याज्ञ०]
अभक्ष्यभक्षणात्पापमगम्यागमनादिजम् ।
नश्यते नात्र संदेहो गोविन्दस्य च कीर्तनात् ।।९३।।
तन्नास्ति कर्मजं लोके वाग्जं मानसमेव वा ।
यत्तु न क्षीयते पापं कलौ गोविन्दकीर्तनात् ।।९४।। [स्क०पु०]
अश्वमेधादिभिर्यज्ञैर्नरमेधैस्तथैव च ।
याजितं तेन येनोक्तं हरिरित्यक्षरद्वयम् ।।९५।।
सर्वेषामेव पापानां संघाते समुपस्थिते ।
अभ्यसेद्दशसाहस्रं प्रणवं शोधनं तु तत् ।।९६।।
दिने दिने तु वेदान्तश्रवणाद्भक्तिसंयुतात् ।
गुरुशुश्रूषया लब्धात्कृच्छ्राशीतिफलं लभेत् ।।९७।।
वेदान्तश्रवणादेव नश्यन्ते चोपपातकाः ।
महापातकसंघाश्च नित्यं वेदान्तसेवनात् ।।९८।। [वि०पु०]
सर्वेषामेव पापानां सङ्गते समुपस्थिते ।
तारं द्वादशसाहस्रमभ्यसेच्छेदनं हि तत् ।।९९।।

यस्तु द्वादशसाहस्त्रं प्रणवं जपतेऽन्वहम् ।
तस्य द्वादशभिर्मासैः परंब्रह्म प्रकाशते ।।१००।।

[मं०उ० ८।१०३-१०४]

प्रायश्चित्तरहस्यं वा प्रवक्ष्यामि समासतः ।
श्रद्धया सहिता यूयं शृणुत ब्रह्मवित्तमाः ।।१०१।।
वेदान्तवाक्यजं ज्ञानं ब्रह्मात्मैकत्वगोचरम् ।
बुद्धिपूर्वकृतं पापं कृत्स्नं दहति वह्निवत् ।।१०२।।
कर्तारं कर्म बध्नाति खलु वेदविदां वराः ।
ज्ञानिनो नैव कर्तृत्वं कर्तृत्वस्य तु साक्षिणः ।।१०३।।
कायिकं वाचिकं चैव मानसं कर्म नान्यथा ।
तथा सति कथं कर्म भवेत्तत्साक्षिरूपिणः ।।१०४।।

[सू० सं० ४/१/४२/१-४]

अज्ञानजन्यकर्त्रादिकारकोत्पन्नकर्मणा ।
श्रुत्युत्पन्नात्मविज्ञानं प्रदीपो बध्यते कथम् ।।१०५।।
अज्ञानान्धतमोरूपं कर्मधर्मादिलक्षणम् ।
स्वप्रकाशकमात्मानं नैव संस्प्रष्टुमर्हति ।।१०६।।
आदित्यं शार्वरं यद्वत्तमो न स्पृशति स्वतः ।
चित्प्रकाशमहादित्यं तमोरूपक्रिया तथा ।।१०७।।

[सू० सं० ४/१/४२/२३-२९]

कर्मसंबन्धमज्ञानादात्मनो मन्यते भ्रमात् ।
विदुषो न भ्रमस्तस्मात्कर्मणा नास्ति संगतिः ।।१०८।।
तस्माद्देहादिसंघातेऽहंमतिं कुरुते तु यः ।
तस्यैव कर्मणा योगः संभ्रान्तस्य सदा बुधाः ।।१०९।।
यस्तु विज्ञानसंपन्नः कर्मणा तस्य संगतिः ।
नैव सत्यं मया प्रोक्तं नास्ति संदेहकारणम् ।।११०।।
तस्माद्ब्रह्मात्मविज्ञानं शाब्दं देशिकपूर्वकम् ।
बद्धिपूर्वकृतं पापं कृत्स्नं निर्दहति क्षणात् ।।१११।।

अपरोक्षात्मविज्ञानं शाब्दं देशिकपूर्वकम् ।
संसारकारणाज्ञानतमसश्चण्डभास्करः ।।११२।।

[सू० सं० ४/१/४२/३२-३६]

महापातकपूर्वाणां पातकानां मुनीश्वराः ।
रहस्यानां प्रसिद्धानां प्रायश्चित्तं हि वेदनम् ।।११३।।
अपरोक्षात्मविज्ञानवतां नैवास्ति पातकम् ।
प्रायश्चित्तं परिज्ञानं परोक्षज्ञानिनां नृणाम् ।।११४।।
तेषां निष्ठामविज्ञाय मनुष्याश्चर्मचक्षुषा ।
विलोक्य पातकैर्युक्तान्मन्वते सत्तमानपि ।।११५।।
यथा ब्रह्मात्मविज्ञानं पातकानां मुनीश्वराः ।
प्रायश्चितं मया प्रोक्तं तथैव ब्रह्मभावना ।।११६।।
श्रुत्याचार्यप्रसादेन सर्वं ब्रह्मेति भावयन् ।
मुच्येत पातकैः सर्वैर्घटिकामात्रतो नरः ।।११७।।
दिनार्धं सकलं ब्रह्म भावयन्गुरुपूर्वकम् ।
बुद्धिपूर्वकृतैः सर्वैः पातकैर्मुच्यते नरः ।।११८।।
स्वस्वरूपानुसंधानान्नृत्यन्तं सर्वकारणम् ।
मुहूर्तं चिन्तयेन्मर्त्यो मुच्यते सर्वपातकैः ।।११९।।

[सू० सं० ४/१/४२/३७-४३]

नृत्यमानं महादेवं साम्बमूर्तिधरं तु वा ।
दिनार्धं चिन्तयन्पापात्प्रसिद्धान्मुच्यतेऽखिलात् ।।१२०।।
त्रिमूर्तीनां तु रुद्रस्य विग्रहं चिन्तयन्दिनम् ।
महापातकसंघैश्च मुच्यते पातकान्तरैः ।।१२१।।
दिनत्रयमभिध्यायन्रुद्रमूर्तिमतन्द्रितः ।
मुच्यते पातकैः सर्वैः प्रसिद्धैर्नात्र संशयः ।।१२२।।
विष्णोश्च विग्रहं ध्यायन्मर्त्यः शुद्धं दिनत्रयम् ।
महापातकसंघैश्च मुच्यते पातकान्तरैः ।।१२३।।
सप्तरात्रं महाविष्णोर्विग्रहं चिन्तयन्नरः ।
मुच्यते पातकैः सर्वैः प्रसिद्धैर्नात्र संशयः ।।१२४।।

ब्रह्मणो विग्रहं शुद्धं सप्तरात्रं विचिन्तयन् ।
महापातकसंघैश्च मुच्यते पातकान्तरैः ।।१२५।।
मासमात्रमभिध्यायन् ब्रह्मणो विग्रहं परम् ।
मुच्यते पातकैः सर्वैः प्रसिद्धैर्नात्र संशयः ।।१२६।।

[सू० सं० ४/१/४२/४५-५१]

चान्द्रायणं पराकं वा कृच्छ्रं सान्तपनादि वा ।
न शक्नोति यतिः कर्तुं न कुर्यात्प्राणसंयमम् ।।१२७।।
यत्पापं नश्यते पुंसामेकाह्ना भोजनेन तु ।
जपात्त्रिकसहस्रस्य तत्पापं नश्यति ध्रुवम् ।।१२८।।
जपात्त्रिकसहस्रस्य यत्पापं नाशयेद्द्विजाः ।
प्राणायामशतेनैव तत्पापं नश्यतेऽखिलम् ।।१२९।।
प्राणायामसहस्रेण यत्पापं नश्यते द्विजाः ।
क्षणमात्रेण तत्सम्यक् हरेर्ध्यानात्प्रणश्यति ।।१३०।।
प्राणायामाज्जपाद्ध्यानान्नान्यद्भिक्षोर्विशोधनम्।
तस्मात्तान्येव कुर्वीत यतिः शुद्ध्यर्थमात्मनः ।।१३१।।
प्राणायामशतं भिक्षुर्यः करोति दिने दिने ।
पितृमातृगुरुघ्नोऽपि त्रिभिरेभिः स मुच्यते ।।१३२।। [अत्रि०]
“प्राणायामैश्च ध्यानैश्च जपैश्च सततं कृतैः ।
दह्यन्ते सर्वपापानि पावकेनेन्धनं यथा ।।१३३।।

[जमदग्नि०]

## यतीनां भोजनादिनियमाः

त्यक्त्वा पुत्रैषणां वित्तैषणां लोकैषणामपि ।
भिक्षा कार्या प्रतिगृहमितीदं साहसं महत् ।।१।।
अहो सौभाग्यमेतेषां मुण्डानां भिक्षया महत् ।
यदेतद्वचनाद्भूपा हित्वा राज्यं श्रिता वनम् ।।२।।
त्यक्त्वा सर्वाणि कर्माणि श्रौतस्मार्तानि सर्वथा ।
परमः क्रियते धर्मो भिक्षाचर्यं मुमुक्षुभिः ।।३।।

वित्तैषणादिव्युत्थानं प्रतियोग्यात्मचिन्तनम् ।
विहायाभिवदन्वेदो भिक्षाचर्यं न लज्जते ।।४।।
वदन्ति वृद्धाः शतशो यथा यक्षस्तथा बलिः ।
निर्भाग्यानां श्रुतिः का वा भिक्षातोऽन्यां क्रियां वदेत् ।।५।। [अद्वैता०]

एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति ।।६।। [बृ० उ० ३/५/१]

त्रीन्वैणवान्दण्डान्दक्षिणे पाणौ धारयेदेकं वा । यद्येकं तदा सशिखं वपनं कृत्वा विसृज्य यज्ञोपवीतं च त्रिषु वर्णेष्वेकागारं भैक्षमश्नीयान्माधुकरीं वा ।।७।। [मैत्रा० उ० ]

"चतुर्षु वर्णेषु भैक्षचर्यं चरेत् । पाणिपात्रेणाशनं कुर्यात् । औषधवत्प्राश्नीयात् प्राणसंधारणार्थं यथा मेदोवृद्धिर्न जायते ।।८।। [काठ० ब्रा०]

अथान्यः परिव्राडेकशाटीपरिहितो मुण्ड उदरपात्र्यरण्यनिष्ठो भिक्षार्थी ग्रामं प्रविशेत् । सायं प्रदक्षिणेनाविचिकित्सं सार्ववर्णिकं भैक्षचरणमभिशस्तपतितवर्जम् ।।९।। [मैत्रा० उ०]

"यतयो भिक्षार्थं ग्रामं प्रविशन्ति पाणिपात्रमुदरपात्रं वा । ॐ हि ॐ हि ॐ हीत्येतदुपनिषदं विन्यसेद्विद्वान्य एवं वेद औषधवदशनमाचरेत्।।१०।। [आरु० उ० ]

स्वव्यतिरिक्तं सर्वं त्यक्त्वा मधुकरवृत्त्याऽऽहारमाहरन्कृशीभूत्वा मेदोवृद्धिमकुर्वन्विहरेत् । माधुकरेण करपात्रेणास्यपात्रेण वा कालं नयेत् । आत्मसंमितमाहारमाहरेदात्मवान्यतिः ।।११।।

आहारस्य च भागौ द्वौ तृतीयमुदकस्य च ।
वायोः संचारणार्थाय चतुर्थमवशेषयेत् ।।१२।।
भैक्षेण वर्तयेन्नित्यं नैकान्नाशी भवेत्क्वचित् ।
निरीक्षन्ते त्वनुद्विग्नास्तद्गृहं यत्नतो व्रजेत् ।।१३।।
पञ्च सप्त गृहाणां तु भिक्षामिच्छेत्क्रियावताम्।
गोदोहमात्रमाकाङ्क्षेन्निष्क्रान्तो न पुनर्व्रजेत् ।।१४।।
नक्ताद्वरश्चोपवासः उपवासादयाचितः ।
अयाचिताद्वरं भैक्षं तस्माद्भैक्षेण वर्तयेत् ।।१५।।

नैव सव्यापसव्येन भिक्षाकाले विशेद्गृहान् ।
नातिक्रामेद्गृहं मोहाद्यत्र दोषो न विद्यते ।।१६।।
श्रोत्रियान्नं न भिक्षेत श्रद्धाभक्तिबहिष्कृतम् ।
व्रात्यस्यापि गृहे भिक्षेच्छ्रद्धाभक्तिपुरस्कृते ।।१७।।
माधुकरमसंक्लृप्तं प्राक्प्रणीतमयाचितम् ।
तात्कालिकं चोपपन्नं भैक्षं पञ्चविधं स्मृतम् ।।१८।।
मनःसंकल्परहितांस्त्रीन्गृहान्पञ्च सप्त वा ।
मधुमक्षिकवत्कृत्वा माधूकरमिति स्मृतम् ।।१९।।
प्रातःकाले च पूर्वेद्युर्यद्भक्तैः प्रार्थितं मुहुः ।
तद्भैक्षं प्राक्प्रणीतं स्यात्स्थितिं कुर्यात्तथापि वा ।।२०।।
भिक्षाटनसमुद्योगाद्येन केन निमन्त्रितम् ।
अयाचितं तु तद्भैक्षं भोक्तव्यं च मुमुक्षुभिः ।।२१।।
उपस्थानेन यत्प्रोक्तं भिक्षार्थं ब्राह्मणेन तत् ।
तात्कालिकमिति ख्यातं भोक्तव्यं यतिभिः सदा ।।२२।।
सिद्धमन्नं यदानीतं ब्राह्मणेन मठं प्रति ।
उपपन्नमिति प्राहुर्मुनयो मोक्षकाङ्क्षिणः ।।२३।।
चरेन्माधूकरं भैक्षं यतिर्म्लेच्छकुलादपि ।
एकान्नं न तु भुञ्जीत वृहस्पतिसमादपि ।
याचिताऽयाचिताभ्यां च भिक्षाभ्यां कल्पयेत्स्थितिम् ।।२४।।
न वायुः स्पर्शदोषेण नाग्निर्दहनकर्मणा ।
नापो मूत्रपुरीषाभ्यां नान्नदोषेण मस्करी ।।२५।।
विधूमे सन्नमुसले व्यङ्गारे भुक्तवज्जने ।
कालेऽपराह्णे भूयिष्ठे भिक्षाचरणमाचरेत् ।।२६।।
अभिशस्तं च पतितं पाषण्डं देवपूजकम् ।
वर्जयित्वा चरेद्भैक्षं सर्ववर्णेषु चापदि ।।२७।।

[सं० उ० २/५९-६४]

पात्रमस्य भवेत्पाणिस्तेन नित्यं स्थितिं नयेत् ।
पाणिपात्रश्चरन्योगी नासकृद्भैक्षमाचरेत् ।।२८।।

आस्येन च यदाहारं गोवन्मृगयते मुनिः ।
तदा समः स्यात्सर्वेषु सोऽमृतत्वाय कल्पते ।।२९।।

[सं० उ० २/७७-७८]

प्राणयात्रानिमित्तं च व्यङ्गारे भुक्तवज्जने ।
काले प्रशस्ते वर्णानां भिक्षार्थं पर्यटेद्गृहान् ।।३०।।
पाणिपात्रश्चरन्योगी नासकृद्भैक्षमाचरेत् ।
तिष्ठन्भुञ्ज्याच्चरन्भुञ्ज्यान्मध्ये नाचमनं यथा ।।३१।।

[वा० प० उ० ५/८-९]

अनिन्द्यं वै व्रजेद्गेहं निन्द्यं गेहं तु वर्जयेत् ।
अनावृते विशेद्द्वारि गेहे नैवावृते व्रजेत् ।। ३२।।

[ना० प० उ० ५/१२]

आतिथ्यं श्राद्धयज्ञेषु न गच्छेद्योगवित्क्वचित् ।
एवं ह्यहिंसको योगी भवेदिति विचारणा ।।३३।।
वह्नौ विधूमे व्यङ्गारे सर्वस्मिन् भुक्तवज्जने ।
विचरेन्मतिमान् योगी न तु तेष्वेव नित्यशः ।।३४।।
यथैवमवमन्यन्ते यथा परिभवन्ति च ।
युक्तस्तथा चरेद्भैक्षं सतां धर्ममदूषयन् ।।३५।।
भैक्षं चरेद् गृहस्थेषु यथाचारगृहेषु च ।
श्रेष्ठा तु परमा चेयं वृत्तिरस्योपदिश्यते ।।३६।।
भैक्षं यवागूं तक्रं वा पयो यावकमेव च ।
फलमूलं विपक्वं वा पिण्याकं सक्तुकोऽपि वा ।।३७।।
इत्येते वै मया प्रोक्ता योगिनां सिद्धिवर्द्धनाः ।
आहारास्तेषु सिद्धेषु श्रेष्ठं भैक्षमिति स्मृतम् ।।३८।।

[वायु पु० १६/१३-१४]

भैक्षेण वर्त्तयेन्नित्यं नैकान्नादी भवेद्यतिः ।
अनिन्दितद्विजगेहे व्यङ्गारे भुक्तिवर्जिते ।
विवादरहिते चैव भिक्षार्थं पर्यटेद्यतिः ।।३९।।
एकान्नादी भवेद्यस्तु कदाचिल्लम्पटो यतिः ।
न तस्य निष्कृतिर्दृष्टा प्रायश्चित्तायुतैरपि ।।४०।।

[वृ० ना० पु० १/२७/९५-९६]

विधूमे न्यस्तमुसले व्यङ्गारे भुक्तवज्जने ।
वृत्ते शरावसम्पाते भिक्षां नित्यं यतिश्चरेत् ।।४१।।
माधूकरमसंक्लृप्तं प्राक्प्रणीतमयाचितम् ।
तात्कालिकं चोपपन्नं भैक्षं पञ्चविधं स्मृतम् ।।४२।।

[आग्ने० पु० १६१/८-९]

सर्वभूतहितः शान्तस्त्रिदण्डी सकमण्डलुः ।
सर्वारामं परिव्रज्य भिक्षार्थी ग्राममाश्रयेत् ।
अप्रमत्तश्चरेद्भैक्षं सायाह्ने नाभिलक्षितः ।।४३।।

[ग०पु० १/१०३/१-२]

आत्मन्यग्नीनारोप्य भिक्षार्थं ग्राममियात् ।
सप्तागारिकं भैक्ष्यमादद्यात् ।
अलाभे न व्यथेत् ।
न भिक्षुकं भिक्षेत् ।
भुक्तेन्तर्जनेऽतीते पात्रसम्पाते भैक्ष्यमादद्यात् ।।४४।।

[वृद्धविष्णु० ९३/२-५, १३]

अष्टौ भिक्षाः समादाय स मुनिः पञ्च सप्त वा ।
अद्भिः प्रक्षाल्य ताः सर्वा भुञ्जीत सुसमाहितः।
अरण्ये निर्जने तत्र पुनरासीत भुक्तवान् ।।४५।।

[संवर्त० १०७-१०८]

विधूमे न्यस्तमुसले व्यङ्गारे भुक्तवज्जने ।
अतीते पात्रसंपाते नित्यं भिक्षां यतिश्चरेत् ।।४६।।
सप्तागारांश्चरेद्भैक्ष्यं भिक्षितं नानुभिक्षयेत् ।।
न व्यथेच्च तथाऽलाभे यथालब्धेन वर्तयेत् ।
न स्वादयेत्तथैवान्नं नाश्नीयात्कस्यचिद्गृहे ।।४७।।

[शंख० ६/२-३/१/२]

मुण्डोऽममोऽपरिग्रहः सप्तागाराण्यसङ्कल्पितानि
चरेद्भैक्षं विधूमे सन्नमुसले ।।४८।। [वसिष्ट० १०/७]

न चोत्पातनिमित्ताभ्यां न च क्षत्राङ्गविद्यया ।
नानुशासनवादाभ्यां भिक्षां लिप्सेत कर्हिचित् ।।४९।।

[मनु० ६/५०]

अलाभे न विषादी स्याल्लाभश्चैनं न हर्षयेत् ।
प्राणयात्रिकमात्रः स्यान्मात्रासङ्गाद्विनिर्गतः ।।५०।।

[वसिष्ठ० १०/१५-१६]

अयाचितमसंक्लृप्तमुपपन्नं यदृच्छया ।
आहारमात्रं भुञ्जीत केवलं प्राणयात्रिकम् ।।५१।।
अथाप्युदाहरन्ति ।
अष्टौ ग्रासा मुनेर्भक्ष्याः षोडशारण्यवासिनः ।
द्वात्रिंशतं गृहस्थस्यापरिमितं ब्रह्मचारिणः ।।५२।।
भैक्षं वा सर्ववर्णेभ्य एकान्नं च द्विजातिषु ।
अपि वा सर्ववर्णेभ्यो न चैकान्नं द्विजातिषु ।।५३।।
अनग्निरनिकेतः स्यादशर्माऽशरणो मुनिः।
भैक्षार्थी ग्राममन्विच्छेत्स्वाध्याये वाचमुत्सृजेत्।।५४।।

[बौधायन०२/१०/६६-६९,७९]

अथ भैक्षचर्या ।

गोदोहमात्रमाकाङ्क्षेत् । अथ भैक्षचर्यादुपावृत्य शुचौ देशे न्यस्तहस्ते पादौ प्रक्षाल्याऽऽदित्यस्याग्रं निवेदयेत् ।।५५।।

[बौधायन० २/१०/५७,५९-६०]

काषायवासाः सन्नमुसले व्यङ्गारे निवृत्तशरावसम्पाते भिक्षेत् ।।५६।।

[बौधायन० २/६/२४]

याचितायाचिताभ्यां तु भिक्षया कल्पयेत्स्थितिम् ।
साधुकारं याचितं स्यात्प्राक्प्रणीतमयाचितम् ।।५७।।

[विष्णु० ४/१]

देहसंरक्षणार्थं तु भिक्षामीहेद्द्विजातिषु ।
पात्रमस्य भवेत्पाणिस्तेन नित्यं गृहानटेत् ।।५८।।

[विष्णु० ४/२८]

अयाचितं यथालाभं भोजनाच्छादनं भवेत् ।
निमन्त्रितोऽथवाश्नीयात्स्वगुणं न प्रकाशयेत् ।।५९।।
सुजीर्णोऽतिकृशो योगी देशान्ताद्विकलेन्द्रियः ।
पुत्रमित्रगुरुभ्रातृपत्नीभ्यो भैक्षमाहरेत् ।।६०।। [क्रतु०]
यत्यन्नं ब्रह्मचार्यन्नमवीरान्नं तथैव च ।

शूद्रान्नं च तथा भिक्षुर्वर्जयेत्परदारवत् ।।६१।। [बृहस्पति०]
अश्नन्माधुकरीं भिक्षां नैवेद्ये तु विसर्जिते ।
परपाकं न गृह्णीयात्किंचिदन्नमुपस्थितम् ।।६२।।
भिक्षान्नमात्रसंभोगी कंथाकौपीनसंग्रही ।
श्रवणादिरतो यश्च स भिक्षुर्मोक्षमाप्नुयात् ।।६३।। [जमदग्नि०]
ब्राह्मणक्षत्रियविशां मेध्यानां भैक्षमाचरेत् ।
तत्राप्यसम्भवे पूर्वादाददीतोत्तरोत्तरात् ।।६४।।
द्विजाभावे तु सम्प्राप्ते उपवासत्रयं गते ।
भैक्षं शूद्रादपि ग्राह्यं रक्षेत्प्राणान् द्विजोत्तमः ।।६५।।

[मेधातिथि०]

कृते देशं त्यजेद् ग्रामं त्रेतायां द्वापरे कुलम् ।
कर्तारं तु कलौ दुष्टं त्यक्त्वा भैक्षं समाचरेत् ।।६६।।
याचितायाचिताभ्यां च भिक्षाभ्यां कल्पयेत्स्थितिम्।
माधुकरं याचितं स्यात्प्राक्प्रणीतमयाचितम् ।।६७।। [दत्तात्रेय०]
माधुकरमथैकान्नं परहंसः समाचरेत् ।
सर्वभूतहितः शान्तस्त्रिदण्डी सकमण्डलुः ।
एकारामः परिव्रज्य भिक्षार्थी ग्राममाश्रयेत् ।।६८।।
अप्रमत्तश्चरेद्भैक्षं सायाह्नेऽनभिलक्षितः ।
रहिते भिक्षुकैर्ग्रामे यात्रामात्रमलोलुपः ।।६९।।[याज्ञ०४/५८]
एककालं चरेद्भैक्षं न प्रसज्जेत विस्तरे ।
भैक्षे प्रसक्तो हि यतिर्विषयेष्वपि सज्जति ।।७०।।[मनु० ६/५५]
अलाभे न विषादी स्याल्लाभो चैनं न हर्षयेत् ।
प्राणयात्रिकमात्रः स्यान्मात्रासंगाद्विनिर्गतः ।।७१।।
अभिपूजितलाभांस्तु जुगुप्सेतैव सर्वशः । [ना०प० उ० ५/६-७]
अभिपूजितलाभैस्तु यतिर्मुक्तोऽपि बध्यते ।।७२।।[मनु० ६/५७-५८]
न्यस्ते विधूमे व्यङ्गारे सर्वस्मिन् भुक्तवज्जने ।
अटेत योगविद्भैक्ष्यं न तु तेष्वेव नित्यशः ।।७३।।

[मा० पु० ४१/६]

सप्तागारांश्चरेद्भैक्षमलाभे तु पुनश्चरेत् ।
प्रक्षाल्य पात्रे भुञ्जीत अद्भिः प्रक्षालयेत्पुनः ।।७४।।
अथवाऽन्यदुपादत्ते पात्रे भुञ्जीत नित्यशः ।
भुक्त्वा तत्संमृजेत्पात्रं यात्रामात्रमलोलुपः ।।७५।।
विधूमे सन्नमुसले व्यङ्गारे भुक्तवज्जने ।
वृत्ते शरावसम्पाते भिक्षां नित्यं यतिश्चरेत् ।।७६।।
गोदोहमात्रं तिष्ठेत कालं भिक्षुरधोमुखः ।
भिक्षेत्युक्त्वा सकृत्तूष्णीमश्नीयाद्वाग्यतः शुचिः।।७७।।[कू०पु०२/२९/३६]
अयाचितमसंक्लृप्तमुपपन्नं यदृच्छया ।
कृत्वा प्राह्णे चरेद् भैक्ष्यं विधूमे भुक्तवज्जने ।।७८।।
वृत्ते शरावसंपाते भैक्ष्यं लिप्सेत मोक्षवित् ।
लाभेन च न हृष्येत नालाभे विमना भवेत् ।
न चातिभिक्षां भिक्षेत केवलं प्राणयात्रिकः ।।७९।।
यात्रार्थी कालमाकाङ्क्षंश्चरेद् भैक्ष्यं समाहितः ।
लाभं साधारणं नेच्छेन्न भुञ्जीताभिपूजितः ।।८०।।
अभिपूजितलाभाद्धि विजुगुप्सेत भिक्षुकः ।
भुक्तान्यन्नानि तिक्तानि कषायकटुकानि च ।।८१।।
नास्वादयीत भुञ्जानो रसांश्च मधुरांस्तथा ।
यात्रामात्रं च भुञ्जीत केवलं प्राणधारणम् ।।८२।।
असंरोधेन भूतानां वृत्तिं लिप्सेत मोक्षवित् ।
न चान्यमन्नं लिप्सेत भिक्षमाणः कथंचन ।।८३।।

[महा०४६/१९/-२४]

अपापमशठं वृत्तमजिह्मं नित्यमाचरेत् ।
जोषयेत सदा भोज्यं ग्रासमागतमस्पृहः ।।८४।।
यात्रामात्रं च भुञ्जीत केवलं प्राणयात्रिकम् ।
धर्मलब्धमथाश्नीयान्न काममनुवर्तयेत् ।।८५।।
ग्रासादाच्छादनादन्यन्न गृह्णीयात् कथंचन ।
यावदाहारयेत्तावत् प्रतिगृह्णीत नाधिकम् ।।८६।।

परेभ्यो न प्रतिग्राह्यं न च देयं कदाचन ।
दैन्यभावाच्च भूतानां संविभज्य सदा बुधः ।।८७।।
नाददीत परस्वानि न गृह्णीयादयाचितः ।
न किंचिद् विषयं भुक्त्वा स्पृहयेत् तस्य वै पुनः ।।८८।।

[महा० आश्व० ४६/३१-३५]

न कुर्यात्प्रत्यहं भिक्षामेकस्यैव गृहे यतिः ।
रसलुब्धो भवेन्नैव सकृच्च मितभुग्भवेत् ।।८९।।
वानप्रस्थाश्रमाद् भिक्षां प्रायो गृह्णीत भिक्षुकः ।
तदन्धसाऽतिशुद्धेन शुद्ध्यत्येवाऽस्य यन्मनः ।।९०।।
आहारो यस्य यावांस्तं तावान्स्त्रीकाम आविशेत्।
अतो मितं नीरसं च भोजनं त्यागिनो हितम् ।।९१।।

[स्क० पु०वै०ख०वा०मा०२३/१७-१८,२३]

अनग्निरनिकेतस्तु ग्रामं भिक्षार्थमाश्रयेत् ।
अनाश्वस्तविधानः स्यान्मुनिर्भावसमन्वितः ।।
लघ्वाशी नियताहारः सकृदन्नं निषेवयेत् ।।९२।।

[पद्मपु०.१/१५/ ३६२-३६२ ]

एककालं चरेद्भैक्षं न प्रसज्येत विस्तरे ।
भैक्ष्यं प्रसक्तो हि यतिर्विषयेष्वपि सज्जति ।।९३।।
सप्तागारं चरेद् भैक्ष्यमलाभे न पुनश्चरेत् ।
गोदोहमात्रं तिष्ठेत कालं भिक्षुरधोमुखः ।।९४।।

[पद्म० ३/६०/२-३]

भैक्ष्येण वर्तयेन्नित्यं नैकान्नादी भवेत्क्वचित् ।
यस्तु मोहेन वान्यस्मादेकान्नादी भवेद्यतिः ।
न तस्य निष्कृतिः काचिद्धर्मशास्त्रेषु दृश्यते ।।९५।।

[कू० पु० २/२८/ १७-१७½] [पद्म पु० ३/५९/१७-१७½]

ग्रासं सुमृष्टं विरसं महान्तं स्तोकमेव वा ।
यदृच्छयैवापतितः ग्रसेदाजगरोऽक्रियः ।।९६।।
शयीताहानि भूरीणि निराहारोऽननुक्रमः ।
यदि नोपनमेद् ग्रासो महाहिरिव दिष्टभुक् ।।९७।।

ओजः सहोबलयुतं विभ्रद् देहमकर्मकम् ।
शयानो बीतनिद्रश्च नेहेतेन्द्रियवानपि ।।९८।।

[श्रीमद्भा० ११/८/२-४]

स्तोकं स्तोकं ग्रसेद् ग्रासं देहो वर्तेत यावता ।
गृहानहिंसन्नातिष्ठेद् वृत्तिं माधुकरीं मुनिः ।।९९।।

[श्रीमद्भा० ११/८/९]

सायंतनं श्वस्तनं वा न संगृह्णीत भिक्षितम् ।
पाणिपात्रोदरामात्रो मक्षिकेव न संग्रही ।।१००।।
सायंतनं श्वस्तनं वा न संगृह्णीत भिक्षुकः ।
मक्षिका इव संगृह्णन् सह तेन विनश्यति ।।१०१।।

[श्रीमद्भा० ११/८/११-१२]

भिक्षां चतुर्षु वर्णेषु विगर्ह्यान् वर्जयंश्चरेत् ।
सप्तागारानसंक्लृप्तांस्तुष्येल्लब्धेन तावता ।।१०२।।
बहिर्जलाशयं गत्वा तत्रोपस्पृश्य वाग्यतः ।
विभज्य पावितं शेषं भुञ्जीताशेषमाहृतम् ।।१०३।।

[श्रीमद्भा० ११/१८/१८-१९]

माधूकरमसंक्लृप्तं प्राक्प्रणीतमयाचितम् ।
तात्कालिकं चोपपन्नं भैक्षं पञ्चविधं स्मृतम् ।।१०४।।
मनःसंकल्परहितान्गृहांस्त्रीन्पञ्च सप्त वा ।
मधुवदाहरणं यत्तन्माधूकरमिति स्मृतम् ।।१०५।।
शयनोत्थापनात्प्राक्च प्रार्थितं भक्तिसंयुतैः ।
तत्प्राक्प्रणीतमित्याह भगवानुशना मुनिः ।।१०६।।
भिक्षाटनसमुद्योगात्प्रागेवापि निमन्त्रितम् ।
अयाचितं तु तद्भैक्षं भोक्तव्यं मनुरब्रवीत् ।।१०७।।
उपस्थानेन यत्प्रोक्तं भिक्षार्थं ब्राह्मणेन हि ।
तात्कालिकमिति ख्यातं तदत्तव्यं मुमुक्षुणा ।।१०८।।
सिद्धमन्नं भक्तजनैरानीतं यन्मठं प्रति ।
उपपन्नं तदित्याहुर्मुनयो मोक्षकाङ्क्षिणः ।।१०९।।

भिक्षाः पञ्चविधा ह्येताः सोमपानसमाः स्मृताः ।
तासामेकतमयाऽपि वर्तयन्सिद्धिमाप्नुयात् ।।११०।। [उशना०]
संप्रार्थितमुपस्थानादसंक्लृप्तमयाचितम् ।
तत्सदैकान्नमप्यद्याद्भैक्षं माधूकराद्वरम् ।।१११।।[क्रतु०]
यतीनामातुराणां तु वृद्धानां दीर्घरोगिणाम् ।
एकान्नेन न दोषोऽस्ति एकस्यैव दिने दिने ।।११२।।
[पराशर०]
जीवितात्ययमापन्नो योऽन्नमत्ति इतस्ततः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ।। ११३।।
नाऽऽपो मूत्रपुरीषाभ्यां नाग्निर्दहनकर्मणा ।
न वायुः स्पर्शदोषेण नान्नदोषेण मस्करी ।।११४।। [मनु०]

**अथ भोजनविधिः –**

"उपाकृत्य शुचौ देशे पात्रं न्यस्य पादौ प्रक्षाल्य आचम्य त्रीन्प्राणायामान्धारयित्वाऽप आचम्य, ओमिति वारिणा भैक्ष्यं प्रोक्ष्य गायत्र्याभिमन्त्र्य "इदं विष्णुर्विचक्रमे" इति विष्णवे हविर्निवेदयेत् । "उदुत्यम् ०, चित्रम्०" इति द्वाभ्यामादित्याय "ब्रह्म जज्ञानम्" इति ब्रह्मणे "भूतेभ्यो नमः" इति भूतेभ्यो निवेदयेत् । शेषमौषधवत्प्राश्नीयात् ।।" ११५।। [शौनक०]

"अथ भैक्षचर्यया उपावृत्य पात्रं शुचौ देशे न्यस्य हस्तौ पादौ प्रक्षाल्य, आचम्य, "उदुत्यम्० चित्रम्० " इत्यादित्यस्याग्रे निवेदयेत् । "ब्रह्मजज्ञानम्०" इति ब्रह्मणे, "इदं विष्णुः०" इति विष्णवे, "भूतेभ्यो नमः; " इति भूतेभ्यो निवेदयेदिति। इति विज्ञायते, आधानप्रभृति यजमान एवाग्नयो भवन्ति। तस्य प्राणो गार्हपत्यः । अपानोऽन्वाहार्यपचनः । व्यान आहवनीयः। उदानसमानौ सक्थ्यावसक्थ्यौ । पञ्च वा एतेऽग्नय आत्मस्था आत्मन्येव जुहोति । स एवात्मा यज्ञ आत्मनिष्ठः । आत्मप्रतिष्ठितः । आत्मनि प्रतिष्ठितः। आत्मानं क्षेमं नयतीति विज्ञायते । भूतेभ्यो दयापूर्वं संविभज्य शेषमद्भिः संस्पृश्य औषधवत्प्राश्नीयात् ।।" ११६।। [बौधायन०]

"न भैक्षपात्रे भुञ्जीत । नाचमनं चरेत् । कृतत्रेताद्वापरेषु पात्रभोजी यतिर्भवेत्। कलौ पात्रे न भुञ्जीत धारयेन्न च कुण्डिकाम् ।।"११७।। [यम०]

"यत्किञ्चिच्छीर्णवर्णं पतितं पात्रं लब्ध्वा तत्राश्नीयात् । न तैजसे

कदाचन। तैजसे पात्रे भोजनं कृत्वा प्राजापत्यं समाचरेत् । ग्रामान्ते विजनेऽरण्ये तटाके नदीपुलिने पुष्करणीषु गत्वा तदन्नमुपयुञ्जीत । तीर्थदेशे प्रक्षालनं कृत्वा सान्तर्धानं पात्रं स्थापयेत् । मृत्तिकात्रयेण तु पादौ प्रक्षाल्य हस्तौ च,आचम्य प्राणायामान् षडाचरेत् । प्रणवेन गायत्र्या अन्नसूक्तं जपित्वा परमात्मस्वरूपं ध्यात्वा "अमृतोपस्तरणमसि" इत्यपः प्राश्य प्राणाहुतिं जुहोति। भोजनमध्ये यत्किञ्चित्सूक्ष्मकेशं मक्षिकाभिहतमन्नं तत्पिण्डमात्रमुत्सृज्य हस्तप्रक्षालनं कृत्वा भोजनं करोति । मुखे केशं लग्नं यदि तत्क्षणात् क्षिपेत् ग्रासमास्येन द्वादशगण्डूषैर्मुखप्रक्षालनं कृत्वा भोजनं करोति ॥"११८॥ [भरद्वाज०]

"सुगुप्तवाङ्मनश्चक्षुर्गुप्तगुह्यः कृताञ्जलिः ।
सुगुप्तभैक्षमाश्रित्य सुगुप्तं भोजनं चरेत् ।।११९।।
न स्पृशेद्वामहस्तेन भुञ्जानोऽन्नं कदाचन ।
न पादौ न शिरोपस्थं कराभ्यां भोजने स्पृशेत् ।।१२०।।
न किञ्चिद्भेषजादद्यात् तत्तथा दन्तधावनात् ।
विना भोजनकालेन न भक्ष्यान् भक्षयेद्यतिः ।।१२१।।

[वृहस्पति०]

"भैक्षं यवागूं भुञ्जीत पयो घृतमथापि वा ।
सुपक्वं फलमूलं च शाकपिण्याकसक्तु वा ।।१२२।।
इत्येते ह्यशनाकारा योगिनः सिद्धिकारकाः ।
तद्भक्षयेदहरहः परमेण समाधिना ।
अपः पीत्वा सकृत्तूष्णीं भुञ्जानः प्राक्समाहितः ।।१२३।।
"प्राणाये" ति तु भुञ्जीत प्रथमामाहुतिं यतिः ।
"अपानाय" द्वितीया स्याद् "व्यानाये" ति ततः परम् ।।१२४।।
"उदानाय" चतुर्थीति "समानाये"ति पञ्चमी ।
इत्थं प्राणाहुतीर्हुत्वा शेषं भुञ्जीत वाग्यतः ।।१२५।।
अपः पुनः सकृत्प्राश्य त्वाचम्य हृदयं स्पृशेत् ।।"१२६।।

[विष्णु०]

"अष्टौ भिक्षाः समादाय स मुनिः सप्त पञ्च वा ।
अद्भिः प्रक्षाल्य तत्सर्वं भुञ्जीत सुसमाहितः ।।१२७।।

न स्वादयीत भुञ्जानः षड्रसान्नैव कीर्तयेत् ।
सत्कृतासत्कृते तुल्यो नाभिनन्दीत न द्विषेत् ।।१२८।।

[संवर्त०]

"अथ ग्रामादाहृत्य एकपात्रेण भैक्षमुदकेन प्लाव्य सकृद्भुञ्जीत । न केनचित्सह संभाषेत् । न किञ्चन याचेदौषधादन्यत् । एवं वर्तमानो यावज्जीवं भिक्षुको मुक्तो भवेत् ।।"१२९।। [कपिल०]

"न क्वचिन्निशि भुञ्जीत भुक्त्वा भुञ्जीत यो यतिः ।
भुञ्जानो निशि संन्यासी पतितो नात्र संशयः ।।१३०।।

[वृद्धजा०]

"हिरण्मयानि पात्राणि कृष्णायसमयानि च ।
यतीनां तान्यपात्राणि भैक्षे वा भोजनेऽपि वा ।।१३१।।
स्वर्णरूप्यकपात्रेषु ताम्रकांस्यायसेषु च ।
भिक्षां दत्त्वा न धर्मोऽस्ति गृहीत्वा नरकं व्रजेत् ।।१३२।।

[यम०]

"न भैक्षपात्रे भुञ्जीत पात्रे नाचमनं चरेत् ।
कृतत्रेताद्वापरेषु पात्रे भोजी यतिर्भवेत् ।
कलौ न पात्रे भुञ्जीत धारयेन्न तु कुण्डिकाम् ।।१३३।।
भुञ्जीत पर्णपुटके पर्णपृष्ठे न जातुचित् ।
पलाशपत्रकदलीदलाभावे ह्यभोजनम् ।।१३४।।
अभावेऽप्यन्यपात्राणां न कांस्ये नैव राजते ।
नापि कार्ष्णायसे नापि सौवर्णे नापि ताम्रके ।।१३५।।
न प्राण्यङ्गे नैव भूमौ न कुशादितृणेषु वा ।
पलाशपर्णे भुञ्जीत पाणिपात्रेऽथवा यदि ।।१३६।।
पलाशपद्मपत्रेषु गृही भुक्त्वैन्दवं चरेत् ।
यतिर्वनस्थश्च ततो लभते चैन्दवं फलम् ।।"१३७।।

[लिखित०]

*

# यतिपात्राणि

अतैजसानि पात्राणि भिक्षार्थं कल्पयेन्मुनिः ।
सर्वेषामेव भिक्षूणां दार्वलाबुमयानि च ।।१।।

[विष्णु० ४/२९]

अलाबुदारुपात्राणि मृण्मयं वैणवं यतेः ।।२।।

[आग्ने० पु० १६१/७]

अलाबुवेणुपात्रं च दारवम्मृण्मयन्तथा ।
भिक्षोश्चत्वारि पात्राणि पञ्चमं नोपपद्यते ।।३।।

[शि०पु० ६/२१/३३]

मृद्वेणुदार्वलाब्वश्ममयं पात्रं यतेः स्मृतम् ।
शुद्धिरद्भिरमीषां तु गोवालैश्चावघर्षणम् ।
न दण्डैर्न च दण्डेन विना वा तेन वा तथा ।।४।।

[वृहत्पारा० १२/१३१-१३२]

मृण्मयालाबुपात्राणि यतीनां च विनिर्दिशेत् ।
तेषां सम्मार्जनाच्छुद्धिरद्भिश्चैव प्रकीर्तिता ।।५।।

[शंख० ६/४-४५]

सौवर्णायसताम्रेषु कांस्यरौप्यमयेषु च ।
भिक्षादातुर्न धर्मोऽस्ति भिक्षुर्भुङ्क्ते तु किल्विषम् ।।६।।
न च कांस्येषु भुञ्जीयादापद्यपि कदाचन ।
पलाशे यतयोऽश्नन्ति गृहस्थः कांस्यभाजने ।।७।।
कांस्यकस्य च यत्पापं गृहस्थस्य तथैव च ।
कांस्यभोजी यतिश्चैव प्राप्नुयात्किल्विषं तयोः ।।८।।

[अ०सं० १५९-१५९]

यतिपात्राणि मृद्वेणुदार्वलाबुमयानि च ।
सलिलं शुद्धिरेतेषां गोवालैश्चावघर्षणम् ।।९।। [याज्ञ० ४/६०]
अतैजसानि पात्राणि तस्य स्युर्निर्व्रणानि च ।
तेषामद्भिः स्मृतं शौचं चमसानामिवाध्वरे ।।१०।।
अलाबुदारुपात्रं च मृन्मयं वैदलं तथा ।
एतानि यतिपात्राणि मनुः स्वायम्भुवोऽब्रवीत् ।।११।।

[मनु० ६/५३-५४]

मृद्दार्वलाबुजं पात्रं वैणवं तान्तवौपलम् ।
पार्णं तार्णं तथा क्षौमं पात्रं पर्णपुटं तथा ।।१२।।
उक्तानि यतिपात्राणि ब्रह्मणा विश्वयोनिना ।
करे कर्पटके चैव आयसे ताम्रभाजने ।
भुञ्जन्भिक्षुर्न लिप्येत लिप्यन्ते गृहमेधिनः ।।१३।। [अत्रि०]
"मृण्मये दारुपात्रेऽलाबुपात्रे वा ।
तेषाञ्च तस्याद्भिः शुद्धिः स्यात् ।।१४।।

[वृहद्विष्णु० ९६/६-७]

"अलाबुं दारुपात्रं च मृण्मयं वैणवन्ततः ।
चत्वार्येतानि पात्राणि मनुराह प्रजापतिः ।।१५।।

[कू०पु०२/२९/९]

मृद्दार्वलाबूफलपर्णपात्रम् ।।१६।।

[शाट्या० उ० १९]

मृत्पात्रं वाऽलाबुपात्रं दारुपात्रं वा ।।१७।। [आरु० उ० ४]
पाणिपात्रमुदरपात्रं वा ।।१८।। [आरु० उ०५]
गेहे गेहे विशेत्कवलमात्रे नापरं गृह्णीयात्पदे
पदे भुञ्जन्नगच्छन्कुल सर्वाशीति ।।१९।। [शौनक०]
पाणिपात्रं चरन्योगी नासकृद्भैक्षमाचरेत् ।
तिष्ठन्भुञ्ज्याच्चरन्भुञ्ज्यान्मध्ये नाऽऽचमनं तथा ।।२०।। [गौतम०]
करपात्रीति विख्यातो बाह्यपात्रविवर्जितः ।
तस्य पुण्यं शतगुणं भवत्येव दिने दिने ।।२१।।

[स्क० पु० का० ख० ४१/३६]

"तार्णं पार्णं च पाषाणमिति" ।।२२।। [कण्व०]
"वेणुदारुशिलालाबुतृणपर्णमयानि च ।
मृण्मयक्षौमपात्राणि गृह्णीयादात्मशक्तितः ।।२३।। [क्रतु०]

*

# भिक्षाटने कर्तव्यता

प्राणवृत्त्यैव संतुष्येन्मुनिर्नैवेन्द्रियप्रियैः ।
ज्ञानं यथा न नश्येत नावकीर्येत वाङ्मनः ।।१।।

[श्रीमद्भा० ११/७/३९]

अलब्ध्वा न विषीदेत काले कालेऽशनं क्वचित् ।
लब्ध्वा न हृष्येद् धृतिमानुभयं दैवतन्त्रितम् ।।२।।
आहारार्थं समीहेत युक्तं तत्प्राणधारणम् ।
तत्त्वं विमृश्यते तेन तद्विज्ञाय विमुच्यते ।।३।।
यदृच्छयोपपन्नान्नमद्याच्छ्रेष्ठमुतापरम् ।
तथा वासस्तथा शय्यां प्राप्तं प्राप्तं भजेन्मुनिः ।।४।।

[श्रीमद्भा० ११/१८/३३-३५]

मेध्यं भैक्षं चरेन्नित्यं सायाह्ने वाग्यतः शुचिः ।
एकवासा विशुद्धात्मा मन्दगामी युगान्तदृक् ।
यथा लब्धं तदश्नीयात्पूजासंस्कारवर्जितः ।।५।। [आदि० पु०]
अनिन्द्यं वै व्रजेद्गेहं निन्द्यं गेहं तु वर्जयेत् ।
अनावृते विशेद् द्वारि गेहे नैवाऽऽवृते व्रजेत् ।।६।।
न वीक्षेद् द्वाररन्ध्रेण भिक्षां लिप्सुः क्वचिद्यतिः ।
न कुर्याद्वै क्वचिद् घोषं न द्वारं ताडयेत्क्वचित् ।।७।।
नैव सव्यापसव्येन भिक्षाकाले व्रजेद्गृहान् ।
अनिन्द्यातिक्रमे योगी प्राणायामशतं चरेत् ।।८।। [अत्रि०]
अदुष्टापतितं साधुं यतिर्यः परिवर्जयेत् ।
स तस्य सुकृतं दत्त्वा दुष्कृतं प्रतिपद्यते ।।९।।
तथैव च गृहस्थस्य निराशो भिक्षुको गतः ।
हुतं दत्तं तपोऽधीतं सर्वमादाय गच्छति ।।१०।।
असंस्कृता तु या कन्या उदक्या चोदिता तु या ।
तया दत्तं न गृह्णीयात्प्राण्यङ्गेनाऽऽयसेन वा ।।११।।

पृथक्कृत्वा तु या भिक्षाऽऽघ्राता मार्जारमूषकैः।
वातोपहतशुष्का च भिक्षा योपहता भवेत् ।।१२।।

[मेधातिथि०]

पीडयित्वाऽपि चाऽऽत्मानमल्पान्नं संप्रयच्छति ।
सा भिक्षा हिंसिता ज्ञेया तादृशीं वर्जयेद्यतिः ।।१३।।
पञ्चाहं सप्तरात्रं वा यत्र भिक्षा न लभ्यते ।
तद्गृहं वर्जयेद्भिक्षुश्चाण्डालगृहवत्सदा ।।१४।।[शौनक०]
हितं मितं सदाऽश्नीयाद्यत्सुखेनैव जीर्यति ।
धातुः प्रकुप्यते येन तदन्नं वर्जयेद्यतिः ।।१५।।
या तु पर्युषिता भिक्षा नैवेद्यादिषु कल्पिता ।
तामभोज्यां विजानीयाद्दाता च नरकं व्रजेत् ।।१६।।
आयसेन तु पात्रेण यदन्नमुपदीयते ।
भोक्ता विष्ठासमं भुङ्क्ते दाता च नरकं व्रजेत् ।।१७।। [अत्रि०]
ऊर्ध्वं जान्वोरधो नाभेः परिधायैकमम्बरम् ।
द्वितीयमन्तर्वासश्च परिधाय रविं ततः ।।१८।।
उपस्थाय च भैक्षार्थं पात्री दण्डी गृहान्व्रजेत् ।
तिष्ठन्सन्दर्शने द्वारि याचेद्भिक्षामधोमुखः ।
वाग्यतः सुप्रसन्नात्मा स्वाध्यायध्यानसंयुतः ।।१९।।
अदृष्टोपक्रमे काले तूष्णीं गोदोहसम्मितम् ।
यदि नोद्यमते कश्चिद् दृष्ट्वाऽप्यन्यगृहं व्रजेत् ।।२०।।
तावत्प्रतिश्रुते तिष्ठेद्यावद्भैक्षं प्रदीयते ।
दृष्टिपूतपदन्यासी मौनी तु सुमतिः शमी।। २१।।
एकवस्त्रैकपात्री च निस्सङ्गः सुप्तवच्चरेत् ।
चतुष्षडष्टकाले वा यतिश्चान्द्रायणेऽपि वा ।
पञ्च सप्त गृहेभ्यो वा भिक्षामिच्छेत्क्रियावताम् ।।२२।।
भवत्पूर्वं सकृद्याचेत्तिष्ठन् भिक्षामधोमुखः ।
गोदोहमात्रमाकाङ्क्षेन्निष्क्रान्तो न पुनर्व्रजेत् ।।२३।।[मेधातिथि०]
"एकवस्त्रैकपात्री च सदैकाकी व्रजेद्यतिः ।
एककालं चरेद्भैक्षं न जघन्यं कथंचन ।।२४।।

ऊर्ध्वं न तिर्यग्दूरं वा निरीक्षेत्पर्यटन्यतिः ।
युगमात्रं महीपृष्ठं भिक्षुर्गच्छेद्विलोकयन् ।।२५।।
न वीक्षेद्वाररन्ध्रेण भिक्षां लिप्सुर्गृहान्तरम् ।
न कुर्याद्घोषणं तत्र न द्वारं ताडयेद्यतिः ।।२६।।
अतिक्रम्य गृहं पूर्वं प्रविशेन्न पुनस्तु तम् ।
प्रविश्य भिक्षामादाय त्रिंशत्प्राणयमांश्चरेत् ।।२७।।
नैव सव्यापसव्येन भिक्षाकाले चरेद् गृहम् ।
अनिन्द्यातिक्रमं कृत्वा प्राणायामशतं चरेत् ।।२८।।
पूर्वासङ्कल्पितं गेहं स्वयं विवृतमाश्रयेत् ।
देशकालविभागेन सामर्थ्यपेक्षयापि च ।
अनागते परे भिक्षौ भिक्षार्थे प्रविशेद् गृहम् ।।२९।।
प्रविश्य भैक्षभुग्गेहं निष्प्रकम्पेन चेतसा ।
गृहिणीदर्शने वापि बाह्यागारेऽपि वा स्थितः ।।३०।।
सव्येनादाय पात्रं तु त्रिदण्डं दक्षिणेन च ।
प्रणवादि जपन्पूर्वं भिक्षां देहीति याचयेत् ।।३१।।
भिक्षार्थं चोदनं कृत्वा शक्तो नोपविशेत्क्वचित् ।
न चान्यद्वस्तु याचेत तृप्तिलोभेन किञ्चन ।।३२।।
कृत्वा भिक्षां दृष्टिपूतां दातुश्च करसम्मिताम् ।
त्रिदण्डं दक्षिणे त्वंसे यतिः सन्धाय पाणिना ।।३३।।
उत्पाट्य पात्रकवचं दक्षिणेन करेण तु ।
पात्रं वामकरे स्थाप्यं न क्वचिद्दक्षिणे करे ।।३४।। [अत्रि०]

"चतुरङ्गुलान्तरितः समपादः निश्चलास्तिष्ठेत् । काष्ठपाषाणतृणमय (मृण्मय)-वर्जं शुचिरितिमत्वा गृह्णीयात् । मुखमण्डलं न कदाचिन्निरीक्षेत् । हस्तपात्रं पश्येत् । अग्रतो युगमात्रावलोकी पार्श्वतः पृष्ठतश्च मुहुर्मुहुर्नावलोकयेत् । विवृतद्वाराणि प्रविशेत् । अपद्वाराणि न प्रविशेत् । द्वारं न हन्यात् । न घोषयेत् । क्षिप्रं न निर्गच्छेत् । चिरं न तिष्ठेदिति ।।३५।। [काश्यप०]

"ग्रामे प्रविष्टे भिक्षार्थं यदि विघ्नो भवेत्क्वचित् ।
पुनर्भैक्षं न भिक्षेत बहिर्ग्रामाद्विनिर्गतः ।।३६।। [देवल०]
"पञ्चाहं सप्तरात्रं वा यस्मिन्भिक्षा न लभ्यते ।
तद्गृहं वर्जयेन्नित्यं चाण्डालगृहवद्यतिः ।।३७।।

तद्दिनानि गृहस्थस्य निराशो भिक्षुको व्रजेत् ।
स्वाध्यायं होमदानं च सर्वमादाय गच्छति ॥३८॥
आहारमात्रादधिकं यतिर्भैक्षं तु नाहरेत् ।
अन्यायेन तु पक्वान्नं चोरवद्दण्डमर्हति ॥३९॥ [जमदग्नि०]
"एकपात्रेण भुञ्जीत निर्दिष्टं व्रतमुत्तमम् ।
नैव दोषो द्विपात्रेण त्वशक्तो व्याधिपीडने ॥४०॥
शक्तश्च नीरुजश्चैव नैकपात्रेण वर्तयेत् ।
पात्रलोभी स दुष्टात्मा नरकं प्रतिपद्यते ॥४१॥
लोभमानस्तु यो भिक्षुः पात्रपूरणमिच्छति ।
दाता स्वर्गमवाप्नोति भोक्ता भुञ्जीत किल्विषम् ॥४२॥
निमन्त्रितस्तु संन्यासी यदा भिक्षां समाचरेत् ।
लोभं तत्र प्रकुर्याच्चेत्पतत्येव न संशयः ॥४३॥
देहि देहीति यो ब्रूयाल्लवणव्यञ्जनादि वा ।
गोमांसतुल्यं तद्भैक्ष्यं भुक्त्वा चान्द्रायणं चरेत् ॥४४॥
यत्किञ्चिद्दीयमानं तु गृहिणीकरसंस्थितम् ।
तद् गृह्णात्यल्पबुद्ध्या चेत्काकयोनिषु जायते ॥४५॥

[वृद्ध जा०]

"भिक्षित्वा न चिरमासीत ।
नेत्युक्ते वाऽदुष्टमनाः परिवर्तेत् ।
नैव पात्रपूरणमन्विच्छेत् ॥४६॥ [कपिल०]

*

# भैक्ष-प्रशंसा

न त्यजेच्चेद्यतिर्मुक्तो यो माधुकरमातरम् ।
वैराग्यजनकं श्रद्धाकलत्रं ज्ञाननन्दनम् ।।१।। [मैत्रे०उ०२/२३]
न भिक्षायां भवेद्दोषो न च भिक्षा प्रतिग्रहः ।
सोमपानसमा भिक्षा तस्मादहरहश्चरेत् ।।२।। [विष्णु]
भिक्षा माधुकरी नाम सर्वपापप्रणाशिनी ।
अवधूता च पूता च सोमपानं दिने दिने ।।३।।
भिक्षाहारो निराहारो भिक्षा नैव प्रतिग्रहः ।
श्रोत्रियान्नं च भैक्षं च हुतशेषं च यद्धविः ।।४।।
आनखाच्छोधयेत्पापं तुषाग्निरिव काञ्चनम् ।
गङ्गायाः सलिलं पुण्यं शालग्रामशिला तथा ।
भिक्षान्नं पञ्चगव्यं च पवित्राणि युगे युगे ।।५।। [शातातप०]
अब्बिन्दुं यः कुशाग्रेण मासि मासि समश्नुते ।
निरपेक्षस्तु भिक्षार्थी स तु तस्माद्विशिष्यते ।।६।।
तप्तकाञ्चनवर्णेन गवां मूत्रेण यावकम् ।
पिबेद् द्वादश वर्षाणि न तद्भैक्षसमं भवेत् ।।७।।
शाकभक्षाः पयोभक्षा ये च यावकभक्षकाः ।
सर्वे ते भैक्षभक्षस्य कलां नार्हन्ति षोडशीम् ।।८।। [कण्व०]
अकार्पण्यं तु बह्वन्नं मन्यन्ते यत्र मानवाः ।
निरीक्षन्ते त्वनुद्विग्नास्तद्गृहं यत्नतो व्रजेत् ।।९।। [मेधातिथि०]
गोदोहमन्नपाकं वा सक्तुपेषणमेव वा ।
एककालं प्रतीक्षेत दर्शनेन विना यतिः ।।१०।।
क्षणमेकं न तिष्ठेद्वै गृहिणां दर्शनाद्यतिः ।
संभ्रमं च न वेक्षेत भिक्षादानार्थमुत्तमम् ।।११।।
न कुप्येतानुकम्पेत न हृष्येन्नैव कुत्सयेत् ।
अतिक्रम्य गृहं लोभान्न पुनस्तद्गृहं विशेत् ।।१२।।

यथा मध्वाददानोऽपि भृङ्गः पुष्पं न बाधते ।
तद्वन्माधुकरीं भिक्षामाददीत गृहाधिपात् ।।
यावतोदरपूर्तिः स्यात्तावद्भैक्षं समाचरेत् ।
सिक्थमप्यधिकं भिक्षुराददानो व्रजत्यधः ।।१३।। [अत्रि०]
पञ्च सप्त गृहाणां च भिक्षामिच्छेत्क्रियावताम् ।
गोदोहमात्रमाकाङ्क्षी निष्क्रान्तो न पुनर्विशेत् ।।१४।। [क्रतु०]
ब्राह्मणकुले वा यल्लभेत तद्भुञ्जीत मधुमांसवर्जं
सायं प्रातर्न च तृप्येत् ।।१५।। [वसिष्ठ०]
बह्वन्नं पच्यते यत्र मन्यन्ते यत्र मानवाः ।
अनुद्विग्नाः प्रयच्छन्ति तं देशं यत्नतो व्रजेत् ।।१६।।
उदक्या शवचाण्डालचौरनग्नकपालिभिः ।
स्पृष्टां भिक्षां त्यजेद्भिक्षुः सचैलो जलमाविशेत् ।।१७।।[वसिष्ठ०]
अप्रमत्तश्चरेद्भैक्षं सायाह्नेऽनभिलक्षितः ।
रहिते भिक्षुकैर्ग्रामे यात्रामात्रमलोलुपः।।१८।।
नक्तात्परश्चोपवास उपवासादयाचितम् ।
अयाचितात्परं भैक्षं तस्माद्भैक्षेण वर्तयेत् ।।१९।। [याज्ञ०]
अश्नन्माधूकरीं भिक्षां नैवेद्ये तु विसर्जिते ।
परपाकं न गृह्णीयात्किंचिदन्नमुपस्थितम् ।।२०।।
[जमदग्नि०]
श्रद्दधानस्य भोक्तव्यं चौरस्यापि विशेषतः ।
नत्वेवं बहुयाज्यस्य यश्चोपनयते बहून् ।।२१।। [व्यास०]
भैक्षादन्यन्न याचेत न चैवोपविशेत्क्वचित् ।
उद्यतां नावमन्येत न चैनां वर्जयेत्पुनः ।।२२।।
भिक्षाटने स्त्रियः काश्चिच्छ्रोत्रियाणां गृहे गृहे ।
तासां विलोकनं कार्यं यथा मातुः स्वसुस्तथा ।।२३।।
आत्मसंमितमाहारमाहरेदात्मवान्यतिः ।
अत्यन्तक्षुधितस्यापि समाधिर्नैव जायते ।।२४।। [दत्तात्रेय०]
उद्यतामाहृतां भिक्षां पुरस्तादप्रचोदिताम् ।
भोज्यां प्रजापतिर्मेने अपि दुष्कृतकारिणः ।।२५।। [अत्रि०]

आहारस्य चतुर्भागमर्धं वाऽप्याहरेद्यतिः ।
युवा चैवारुजः शक्तः प्रसङ्गं तत्र वर्जयेत् ।।२६।।
अन्नसङ्गाद्बलं दर्पो विषयासक्तिरेव च ।
कामः क्रोधस्तथा लोभः पतनं नरके ध्रुवम् ।।२७।।
तावज्जितेन्द्रियो न स्याद्विजितान्येन्द्रियः पुमान् ।
न जयेद्रसनं यावज्जितं सर्वं जिते रसे ।।२८।।
अष्टौ ग्रासा मुनेः प्रोक्ताः षोडशाऽऽरण्यवासिनः ।
द्वात्रिंशत्तु गृहस्थस्य यथेष्टं ब्रह्मचारिणः ।।२९।। [यम०]
तत्र ग्रासप्रमाणं व्याघ्र आह –
चतुरङ्गुलमुत्सेधं चतुरङ्गुलमायतम् ।
एतद्ग्रासप्रमाणं तु व्याघ्रेण परिभाषितम् ।।३०।।
भुक्त्वा भुक्त्वोपभुञ्जीत नियमार्थं यतिःसदा ।
भैक्षादुपावृतो भिक्षुः पश्चात्केनचिदाहृतम् ।।३१।।
फलं मूलं पयस्तक्रं दधि पुष्पं घृतं तथा ।
शाकादिव्यञ्जनं पेयं गृह्णन्भिक्षुर्न दुष्यति ।।३२।। [व्याघ्र०]
एकपात्रं तु भिक्षूणां निर्दिष्टं फलमुत्तमम् ।
नैव दोषो द्विपात्रेण अशक्तौ व्याधिपीडिते ।।३३।। [जाबाल०]
सर्वेषामेव भिक्षूणां त्यक्तसर्वममत्वताम् ।
अतैजसानि पात्राणि भुज्यर्थं क्लृप्तवान्मनुः ।।३४।। [विष्णु०]

पादौ प्रक्षाल्याऽऽचम्य त्रीन्प्राणायामान्धारयित्वा भैक्षमोमिति वारिणा संप्रोक्ष्य दक्षिणेन स्पृष्ट्वा प्रणवेनाभिमन्त्र्याश्नीयादिति ।।३५।। [बौधायन०]

प्रोक्षितं प्रणवेनैव हुतमाध्यात्मिकादिषु ।
शरीरं व्रणवत्पश्येदन्नं तु व्रणलेपवत् ।।३६।। [यम०]
गङ्गातोयाभिषिक्तां तु भिक्षां योऽश्नाति योगवित् ।
न तत्क्रतुशतैरिष्ट्वा फलं प्राप्नोति मानवः ।।३७।।
सांतपनसहस्रं तु चान्द्रायणशतानि च ।
अश्वमेधाष्टकं चैव तद्विष्णोः शेषमुत्तमम् ।।३८।।
विष्णोर्नैवेद्यसंशुद्धं मुनिभिर्भोज्यमुच्यते ।
अन्यदेवस्य नैवेद्यं भुक्त्वा चान्द्रायणं चरेत् ।।३९।।

गङ्गातोयं च भैक्षं च वैष्णवान्नं विशेषतः ।
आनखान्मोचयेत्पापं मन्त्रपूतं हविर्यथा ।।४०।। [यति॰ समु॰]
"आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः ।
स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः ।।४१।।"

[छा॰ उ॰ ७/२६]

भैक्षं यवागू तक्रं वा पयो यावकमेव च ।
फलं मूलं विपक्वं वा कणपिण्याकसक्तवः ।।४२।।
इत्येते वै शुभाहारा योगिनः सिद्धिकारकाः ।
त्वङ्मूलपत्रपुष्पाणि ग्राम्यारण्यफलानि च ।।४३।।
कणयावकपिण्याकशाकतक्रपयोदधि ।
भिक्षां सर्वरसोपेतां हिंसावर्जं समाचरेत् ।।४४।। [विष्णु॰]
मिताशनो भवेन्नित्यं भिक्षुर्मोक्षपरायणः ।
कामदर्पादयो दोषा न भवन्ति मिताशिनः ।।४५।।
कुटुम्बसंकटं चैव मलेनोपहतं गृहम् ।
पीडयाऽन्नं प्रयच्छेद्यस्तद्गृहं वर्जयेद्यतिः ।।४६।।
उदक्या चोदितं ह्यन्नं द्विजान्नं शूद्रचोदितम् ।
प्राण्यङ्गे चाऽऽयसे क्लृप्तं भिक्षुर्यत्नेन वर्जयेत् ।।४७।।
नाश्नन्ति ह्यशुचेर्देवा नाश्नन्ति वृषलीपतेः ।
स्त्रीजितान्नं न चाश्नन्ति तदन्नं वर्जयेद्यतिः ।।४८।।
चिकित्सकस्य मृगयाशल्यहर्तुश्च पाशिनः ।
कुलटाषण्ढयोरन्नमुद्यतं स त्यजेद्यतिः ।।४९।। [अत्रि॰]
दर्व्या देयं घृतं चान्नं लवणं व्यञ्जनं तथा ।
अपक्वं स्नेहपक्वं च न तु दर्व्या कदाचन ।।५०।।
हस्तदेयं तु यद्दर्व्या दर्व्या देयं तु हस्ततः ।
एतद्यो ब्राह्मणोऽश्नीयात्सोऽश्नीयान्मूत्ररेतसी ।।५१।।
यदि भैक्षं समादाय पर्युषेद्योगवित्तमः ।
स पर्युषितदोषेण भिक्षुर्भवति वै कृमिः ।।५२।।
तस्माद्भिक्षां समादाय पर्युषेन्न कदाचन ।
भिक्षार्थं प्रविशेद्ग्राममभावे वनवासिनाम् ।।५३।।

स्ववृत्तस्य गृहे भिक्षेन्न तु तेष्वेव नित्यशः ।
अभावे बहुगेहानां तेषु भिक्षेदलोलुपः ।।५४।।
उदक्याशवचाण्डालचौरनग्नकपालिकान् ।
पतितान्पिशुनान्स्पृष्ट्वा भिक्षां भिक्षुः परित्यजेत् ।।५५।। [देवल०]
निमन्त्रितस्तु संन्यासी यदा भैक्षं समाचरेत् ।
लोभात्तत्र प्रवर्तेत पतत्येव न संशयः ।।५६।।
यत्किंचिद्दीयमानं तु गृहिणीकरसंस्थितम् ।
भिक्षां भिक्षुर्न गृह्णीयात्काकयोनिषु जायते ।।५७।। [आदि०पु०]
उपस्थानाद्यदा पूर्वं भिक्षार्थं देशितो भवेत् ।
न गच्छेत्तद्गृहं भिक्षुस्तदहर्वै कथंचन ।।५८।।
द्वावेवाऽऽश्रमिणौ भोज्यौ वानप्रस्थो गृही तथा ।
अभोज्यमन्नमन्येषामितरेषां तु लिङ्गिनाम् ।।५९।। [अत्रि०]
विधूमे च प्रशान्तौ च यस्तु माधुकरीं चरेत् ।
गृहे च विप्रमुख्यानां यतिः सर्वोत्तमः स्मृतः ।।६०।।
दण्डभिक्षां च यः कुर्यात्स्वधर्मे व्यसनं विना ।
यस्तिष्ठति न वैराग्यं याति नीचयतिर्हि सः ।।६१।।
यस्मिन्गृहे विशेषेण लभेद्भिक्षां च वासनात् ।
तत्र नो याति यो भूयः स यतिर्नेतरः स्मृतः ।।६२।।

[ना० प० उ० ६/६-८]

*

# यतीनां माधूकरादिव्यतिरिक्तान्ने दोषदर्शकाणि वचनानि

भैक्षेण वर्तयेन्नित्यं नैकान्नादी भवेत्क्वचित् ।
एकान्नादी भवेद्यस्तु कदाचिल्लम्पटो यदि ।।१।।
निष्कृतिर्नैव तस्यास्ति धर्मशास्त्रेषु सर्वदा ।
परान्नं नैव गृह्णीयाद्भिक्षुः स्वाश्रमपालकः ।।२।।
परान्नवर्जनादेव भिक्षुर्भिक्षुरिति स्मृतः ।
अप्येकपङ्क्त्या नाश्नीयात्संयुक्तः स्वजनैरपि ।।३।।
को हि जानाति किं तस्य प्रच्छन्नं पातकं भवेत् ।
भस्मस्तम्भजलद्वारमार्गैः पङ्क्तिं च भेदयेत् ।।४।।
यतिः श्राद्धे तथैकान्ने रागाद्यस्तु प्रवर्तते ।
नाममात्रो भवेद्भिक्षुः स एव परवञ्चकः ।।५।।
परान्नविमुखो भिक्षुः परं ज्ञानमवाप्नुयात् ।
तस्मात्परित्यजेद्भिक्षुः परान्नं नृपदण्डवत् ।।६।।
श्रवणं ब्रह्मचर्यं च वैराग्यं ज्ञानमेव च ।
चत्वार्येतानि नश्यन्ति परान्ननिरतस्य वै ।।७।। [आदित्य पु०]
एकान्नं न तु भुञ्जीत न शूद्रान्नं न वह्वपि ।
अशक्तोऽनुग्रहार्थं वा यतिरेकान्नभुग्भवेत् ।।८।।
आहारस्य चतुर्भागमर्धं वाप्याहरेद्यदि ।
युवा चैवारुजश्चैव प्रसङ्गं तत्र वर्जयेत् ।।९।।
अन्नसङ्गाद्बलं दर्पो विषयासक्तिरेव च ।
कामः क्रोधस्तथा लोभः पतनं नरके ततः ।।१०।।
ज्ञानेन मुच्यते जन्तुस्तपसा स्वर्गमश्नुते ।
नरकं विषयासङ्गात्त्रयो मार्गास्तपस्विनाम् ।।११।। [मेधातिथि०]
"याचितायाचिताभ्यां तु भिक्षाभ्यां वर्तयेद्यतिः ।।"१२।। [कात्या०]
"अशक्तो भेषजार्थं वा यतिरेकान्नभुग्भवेत् ।।१३।।

व्याधितानां यतीनां तु वृद्धानां दीर्घरोगिणाम् ।
एकान्नभोजने चापि नैनस्तेषां तु विद्यते ।।१४।। [अंगिरा०]
"यात्रामात्रं भुञ्जीत" ।।१५।।[बौधायन०]
असङ्क्लेतिततात्कालिकादिप्रशस्तान्नं भुञ्जीतेति ।।१६।।
प्रेतान्नं वर्जयेद्यतिरिति ।।१७।।
नक्तात् परं चोपवास उपवासादयाचितम् ।
अयाचितात्परं भैक्षं तस्माद्भैक्षेण वर्तयेत् ।।१८।।
प्राजापत्यसहस्रं च भैक्षं च तुलया धृतम् ।
प्राजापत्यसहस्राद्धि भैक्षमेवातिरिच्यते ।।१९।। [कपिल०]
चरेन्माधुकरं भैक्षं यतिर्म्लेच्छकुलादपि ।।२०।।
ब्राह्मणेभ्यः परं नास्ति वासुदेवात्परं न च ।
वर्णाश्रमात्परो नास्ति नास्ति वेदसमा श्रुतिः ।।२१।।
नास्ति भैक्षसमा शुद्धिः तपो नाऽनशनात्परम् ।
भैक्षं माधूकरं यत्तन्महापातकनाशनम् ।
तस्मात्तेनैव वर्तेत शुद्धे पात्रेऽथ निर्व्रणे ।।२२।। [यम०]
"न क्रियागोत्रचरणं शौचाशौचं शुभाशुभम् ।
पृच्छेन्माधुकरे भैक्षे शीलं वृत्तं श्रुतं कुलम् ।।२३।।
पात्रे तु पतिते भैक्षे शौचाशौचं विनश्यति ।।"२४।। [क्रतु०]
"न वर्णविचयं कुर्यान्न च पृच्छेच्छुभाशुभम् ।
पात्रे तु पतिते भैक्षे शौचाशौचं न चिन्तयेत् ।।"२५।। [वृद्धजा०]
"न ज्ञानिनां कुले भिक्षेत, अन्तेवासिपरिबन्धिज्ञातीश्वरप्रेतसूतकगृहेषु भिक्षामुपलभ्य न गृह्णीयात् । आत्मनः संस्तुतं परबाधाकरं च वर्जयेत् । ।" २६।। [अत्रि०]
"सुजीर्णश्च कृशो योगी प्रशान्तो विकलेन्द्रियः ।
शिष्यबन्धुसुतभ्रातृसखिभ्यो भैक्षमाचरेत् ।।२७।।
अश्वशय्यासनादीनां बाह्यानां स्पर्शलक्षणैः ।
याजनाध्यापनव्याख्यावस्त्रभाण्डपरिग्रहैः ।।२८।।
मैथुनेक्षणसंकल्पैः सङ्करी स्याद्यतिः कृतैः ।
तस्मात्पुत्राद्भैक्षमिच्छेद् गृहेऽरण्येऽपि वाश्रयेत् ।।२९।। [कपिल०]

"माधुकरेण वर्तेत न कुर्यादितरत्सदा ।
सर्वदा कुत्सिता वृत्तिरनिन्द्या मन्त्रणाद्दते ।।३०।।
माधुकरमनाक्षिप्तमुपपन्नं यदृच्छया ।
तदश्नीयादनिन्द्यान्नं निस्स्पृहेणैव चेतसा ।।३१।।
षट्त्रीन्वापि च सप्ताष्टौ नित्यं भिक्षुर्गृहांश्चरेत् ।
माधुकरमिदं श्रेष्ठमूर्ध्वं वा कामतश्चरेत् ।।३२।।
शाठ्यं वाप्यथ दैन्यं वा लक्ष्यते यद्गृहे क्वचित् ।
वर्जयेत्तद् गृहं भिक्षुः काकजग्धं यथा हविः ।।३३।।
उदक्या चोदितं ह्यन्नं द्विजान्नं शूद्रचोदितम् ।
प्राण्यङ्गे चायसे वापि क्लृप्तान्नं वर्जयेद्यतिः ।।३४।।
पित्रर्थं कल्पितं पूर्वं देवार्थं वान्यकारणात् ।
वर्जयेत्तादृशीं भिक्षां परबाधाकरीं तथा ।।३५।।
नोत्पन्ना सन्ततिः काचिद्यत्र स्त्रीपुंसयोगृहि ।
नाश्नीयात्तद्गृहे भिक्षुर्भुक्त्वा चान्द्रायणं चरेत् ।।३६।।" [अत्रि०]

## संन्यासिनां श्राद्धभोजननिषेधः

हव्यं कव्यं च राजेन्द्र नाश्नीयादात्मवान्यतिः ।
हव्यकव्यपरो भिक्षुः पतत्येव न संशयः ।।१।। [महा०]
श्राद्धभोजी यतिर्नित्यमाशु गच्छति शूद्रताम् ।
तादृशं कल्मषं दृष्ट्वा सचैलो जलमाविशेत् ।।२।। [आपस्त०]
श्राद्धान्नं यस्य कुक्षौ तु मुहूर्तमपि वर्तते ।
भिक्षोश्चत्वारि नश्यन्ति आयुः प्रज्ञा यशो बलम् ।।३।। [जैमिनि०]
भवत्स्वावाहयामीति यावदुच्चारयेद्द्विजः ।
तावत्प्रेतत्वमाप्नोति भिक्षुः सुकृतसंक्षयात् ।।४।। [मेधातिथि०]
श्रवणं मननं ध्यानं ज्ञानं स्वाध्याय एव च ।
सद्यो निष्फलतां याति सकृच्छ्राद्धान्नभोजनात् ।।५।।

अन्तःकरणशुद्धिस्तु न तस्यैव तु सर्वदा ।
तदन्नं प्रेतयोग्यं च भवेत्संकल्पमात्रतः ।।६।।
तीर्थश्राद्धममाश्राद्धमष्टका पार्वणं तथा ।
मासिश्राद्धं गयाश्राद्धमेकोद्दिष्टं महालयम् ।।७।।
अवश्यं भिक्षुरेतानि वर्जयेत्परदारवत् ।
संक्रान्तौ पर्वणि शुभे व्यतीपाते च वैधृतौ ।।८।।
एकान्नं च यतिर्भुक्त्वा ऐन्दवं तद्विशोधनम् ।
यत्यन्नं ब्रह्मचार्यन्नमवीरान्नं तथैव च ।।९।।
शूद्रान्नं च सदा भिक्षुर्वर्जयेत्परदारवत् ।
चरेन्माधुकरीं वृत्तिं यतिर्म्लेच्छकुलादपि ।।१०।।
एकान्नं न तु भुञ्जीत वृहस्पतिसमादपि ।
भैक्षं वा सर्ववर्णेभ्य एकान्नं वा द्विजातिषु ।।११।।
न चैकान्नं द्विजेषु स्यात्कामं स्यात्सार्ववर्णिकम् ।
भिक्षार्थं च पृथक्पक्वं यत्संस्कारविवर्जितम् ।
तदन्नं सर्वथा त्याज्यं यतीनां मेध्यवद्भवेत् ।।१२।। [वृहस्पति०]

माधुकरादिव्यतिरिक्तान्नदोषे कारणमाह पराशरः —

अन्नदोषेण चित्तस्य कालुष्यं सर्वदा भवेत् ।
कलुषीकृतचित्तानां धर्मः सम्यङ् न भासते ।।१३।।
अधर्मो धर्मरूपेण विभाति च न संशयः ।
स्वं भाति न परं ब्रह्म न भाति चावभासते ।।१४।।
ब्रह्मविद्याभिवाञ्छा च कदाचिन्नैव जायते ।
मणिमन्त्रौषधैर्वह्निः सुदीप्तोऽपि यथेन्धनम् ।।१५।।
प्रदग्धुं नैव शक्तः स्यात्प्रतिबन्धस्तथैव च ।
ज्ञानाग्निरपि संजातः सुदीप्तः सुद्धोऽपि वा ।
प्रदग्धुं न च शक्तः स्यात्प्रतिबन्धस्तु किल्विषम् ।।१६।।

प्रतिबन्धो नाम दुष्टान्नासत्यभाषणनिन्दाविषयलाम्पट्यमित्यादि ।।

तदुक्तम् —

कर्तव्याऽऽशयशुद्धिस्तु भिक्षुकेण विशेषतः ।
ज्ञानोत्पत्तिनिमित्तत्वात्स्वातन्त्र्यकरणाय च ।।१७।।

[याज्ञ० ४/६२]

तथा च श्रुतिः-

"आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः ।
स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः ।।१८।।

[छा० उ० ७/२६/२]

निष्कलुषो भवेन्मर्त्य एवं शुद्धान्नभोजनात् ।
प्रसीदन्तीन्द्रियाण्याशु सत्त्वं च परिवर्द्धते ।।१९।।
अन्नशुद्ध्यैव सत्त्वस्य विवृद्धिस्सर्वदेहिनाम् ।
सत्त्ववृद्ध्यैव सत्कर्मनिरतो वर्जयदशन् ।।२०।।
आरोग्यं रूपवत्ता च कीर्तिः श्रीर्ज्ञानमेव च ।
शान्तिः सत्कर्मणि श्रद्धा शुद्धान्नेन भवन्ति हि ।।२१।।
कामःक्रोधस्तथा लोभः परहिंसारुचिस्तथा ।
निद्रालस्यादयो दोषा अमेध्यान्ननिषेवणात् ।।२२।।
अशुद्धान्नाशनात् पुंसां रोगा बाह्यास्तथान्तराः ।
शत्रुवृद्धिर्गृहद्रोहस्तामसीगतिरेव च ।।२३।।
परदारपरद्रव्यसंसक्तिर्दुष्टभोजनात् ।
कार्यबुद्ध्येव कालेन क्रियन्ते ते कुहेतिभिः ।।२४।।

[शाण्डिल्य० १३५-१४०]

पथ्यं मितं च शुद्धं च रस्यं हृदयनन्दनम् ।
स्निग्धं दृष्टिप्रियं चोष्णमन्नं भोज्यं मनीषिभिः ।।२५।।

[शाण्डिल्य० १४३]

*

## भिक्षाशनानन्तरं पुराणश्रवणं तस्य फलं च

**भिक्षाशनान्तरं शेषकालं पुराणश्रवणेन नयेत् । तथा च दक्षः -**

इतिहासपुराणाभ्यां षष्ठसप्तमकौ नयेत् ।।१।।
कालाविति शेषः ।

पुराणश्रवणे भक्तिमूर्खस्यापि प्रवर्तते ।
भक्त्याऽविच्छिन्नया मुक्तिस्तस्मात्पौराणमभ्यसेत् ।।
तदभ्यासात्परं ब्रह्मभावमापद्यते मुनिः ।।२।। [अङ्गिरा]
बन्धमोक्षविभागज्ञो बुद्ध्वा चेन्मोक्षणेच्छया ।
अपायान्वेषणे युक्तः को न मुच्येत बन्धनात् ।।३।।
यथा चित्तं समायुक्तं जन्तोर्विषयगोचरे ।
यदि नारायणेऽप्येवं को न मुच्येत बन्धनात् ।।४।।
अशास्त्रदृष्टमार्गेषु यथा चित्तक्षयो भवेत् ।
यद्येवं शास्त्रदृष्टेषु को न मुच्येत बन्धनात् ।।५।।
आदरेण तथा स्तौति धनवन्तं धनेच्छया ।
तथा चेद्विश्वकर्तारं को न मुच्येत बन्धनात् ।।६।।
यथा सुनिपुणः सम्यक् परदोषेक्षणं प्रति ।
तथा चेन्निपुणः स्वेषु को न मुच्येत बन्धनात् ।।७।।
अर्थार्थं यानि कर्माणि करोति कृपणो जनः ।
तान्येव यदि मोक्षार्थी को न मुच्येत बन्धनात् ।।८।।
यावत्प्रलपते हृष्टो देशराज्यादिकं बहु ।
तावच्चेत्प्रलपेच्छास्त्रं को न मुच्येत बन्धनात् ।।९।।
आत्मनो येन यत्नेन लोकस्य कुरुते प्रियम् ।
आत्मनो यदि तेनैव को न मुच्येत बन्धनात् ।।१० ।।
सुतां रूपवतीं दृष्ट्वा यथा चित्तं न कम्पते ।
तथा चेत्परदारेषु को न मुच्येत बन्धनात् ।।११।।
स्तूयमानो यथा नित्यं सुप्रसन्नो भवेन्नरः ।
यद्येवं निन्द्यमानोऽपि को न मुच्येत बन्धनात् ।।१२।

[वृहस्पति०]

*

# पर्यटनादिविधिः

हिमवद्विन्ध्ययोर्मध्ये ख्यातः पुण्यतमः श्रुतौ ।
देशः सरस्वतीतीरे नर्मदायास्तु पश्चिमे ।।१।।
दग्धो वै वह्निना पूर्वं पवित्रीकरणाय वै ।
योगज्ञानतपोध्यानसिद्ध्यर्थं वै महात्मनाम् ।।२।
तस्मिन्देशे सदा भिक्षुः स्वधर्ममनुपालयन् ।
पर्यटेत्तु सदा योगी वीक्षयन्वसुधातलम् ।।३।। [अत्रि०]
एक एव चरेन्नित्यं सिद्ध्यर्थमसहायकः ।
सिद्धिमेकस्य पश्यन्हि न जहाति न हीयते ।।४।।
कपालं वृक्षमूलानि कुचैलमसहायता ।
समता चैव सर्वस्मिन्नेतन्मुक्तस्य लक्षणम् ।।५।।
सर्वभूतहितः शान्तस्त्रिदण्डी सकमण्डलुः ।
एकारामः परिव्रज्य भिक्षार्थं ग्राममाविशेत् ।।६।।
एको भिक्षुर्यथोक्तः स्याद्द्वावेव मिथुनः स्मृतम् ।
त्रयो ग्रामः समाख्यात ऊर्ध्वं तु नगरायते ।।७।।
नगरं न हि कर्तव्यं ग्रामो वा मिथुनं तथा ।
एतत्त्रयं प्रकुर्वाणः स्वधर्माच्च्यवते यतिः ।।८।।
राजवार्तादि तेषां स्याद्भिक्षावार्ता परस्परम् ।
स्नेहपैशुन्यमात्सर्यं सन्निकर्षान्न संशयः ।।९।।
एकाकी निःस्पृहस्तिष्ठेन्न हि केन सहालपेत् ।
दद्यान्नारायणेत्येव प्रतिवाक्यं सदा यतिः ।।१०।।
एकाकी चिन्तयेद्ब्रह्म मनोवाक्कायकर्मभिः ।
मृत्युं च नाभिनन्देत जीवितं वा कथंचन ।।११।।
कालमेव प्रतीक्षेत यावदायुः समाप्यते ।
नाभिनन्देत मरणं नाभिनन्देत जीवितम् ।
कालमेव प्रतीक्षेत निर्देशं भृतको यथा ।।१२।।

[ना० प० उ० ३/५३-६१]

निर्द्वन्द्वो नित्यसत्त्वस्थः सर्वत्र समदर्शनः ।
तुरीयः परमो हंसः साक्षान्नारायणो यतिः ।।१३।।
एकरात्रं वसेद्ग्रामे नगरे पञ्चरात्रकम् ।
वर्षाभ्योऽन्यत्र वर्षासु मासांश्च चतुरो वसेत् ।।१४।।
द्विरात्रं वा वसेद् ग्रामे भिक्षुर्यदि वसेत्तदा ।
रागादयः प्रसज्येरंस्तेनासौ नारकी भवेत् ।।१५।।
ग्रामान्ते निर्जने देशे नियतात्माऽनिकेतनः ।
पर्यटेत्कीटवद्भूमौ वर्षास्वेकत्र संवसेत् ।।१६।।
एकवासा ह्यवासा वा एकदृष्टिरलोलुपः ।
अदूषयन्सतां मार्गं ध्यानयुक्तो महीं चरेत् ।।१७।।
शुचौ देशे सदा भिक्षुः स्वधर्ममनुपालयन् ।
पर्यटेत् सदा योगी वीक्षयन्वसुधातलम् ।।१८।।
न रात्रौ न च मध्याह्ने संध्ययोर्नैव पर्यटन् ।
न शून्ये न च दुर्गे वा प्राणिबाधाकरे न च ।।१९।।
एकरात्रे वसेद्ग्रामे पत्तने तु दिनत्रयम् ।
पुरे दिनद्वयं भिक्षुर्नगरे पञ्चरात्रकम् ।
वर्षास्वेकत्र तिष्ठेत स्थाने पुण्यजलावृते ।।२०।।
आत्मवत्सर्वभूतानि पश्यन्भिक्षुश्चरेन्महीम् ।
अन्धवत्कुब्जवच्चैव बधिरोन्मत्तमूकवत् ।।२१।।
स्नानं त्रिषवणं प्रोक्तं बहूदकवनस्थयोः ।
हंसे तु सकृदेव स्यात्परहंसे न विद्यते ।।२२।।

[ना० प० उ० ४/१३-२३]

परहंसाश्रमस्थे हि स्नानादेरविधानतः ।
अशेषचित्तवृत्तीनां त्यागं केवलमाचरेत् ।।२३।।

[ना०प०उ० ४/२५]

न तस्य विद्यते कार्यं न लिङ्गं वा विपश्चितः ।
निर्ममो निर्भयः शान्तो निर्द्वन्द्वोऽवर्णभोजनः ।।२४।।
मुनिः कौपीनवासा स्यान्नग्नो वा ध्यानतत्परः ।
एवं ज्ञानपरो योगी ब्रह्मभूयाय कल्पते ।।२५।।

लिङ्गे सत्यपि खल्वस्मिञ्ज्ञानमेव हि कारणम् ।
निर्मोक्षायेह भूतानां लिङ्गग्रामो निरर्थकः ।।२६।।
यन्न सन्तं न चासन्तं नाश्रुतं न बहुश्रुतम् ।
न सुवृत्तं न दुर्वृत्तं वेद कश्चित्स ब्राह्मणः ।।२७।।
तस्मादलिङ्गो धर्मज्ञो ब्रह्मवृत्तमनुव्रतम् ।
गूढधर्माश्रितो विद्वानज्ञातचरितं चरेत् ।।२८।।
संदिग्धः सर्वभूतानां वर्णाश्रमविवर्जितः ।
अन्धवज्जडवच्चापि मूकवच्च महीं चरेत् ।।२९।।
तं दृष्ट्वा शान्तमनसं स्पृहयन्ति दिवौकसः ।
लिङ्गाभावात्तु कैवल्यमिति ब्रह्मानुशासनम् ।।३० ।।

[ना० प० उ० ४/३१-३७]

अव्यक्तलिङ्गोऽव्यक्तार्थो मुनिरुन्मत्तबालवत् ।
कविर्मूकवदात्मानं तद्दृष्ट्या दर्शयेन्नृणाम् ।।३१।।
न कुर्यान्न वदेत्किंचिन्न ध्यायेत्साध्वसाधु वा ।
आत्मारामोऽनया वृत्त्या विचरेज्जडवन्मुनिः ।।३२।।
एकश्चरेन्महीमेतां निःसङ्गः संयतेन्द्रियः ।
आत्मक्रीड आत्मरतिरात्मवान्समदर्शनः ।।३३।।
बुधो बालकवत्क्रीडेत्कुशलो जडवच्चरेत् ।
वदेदुन्मत्तवद्विद्वान् गोचर्यां नैगमश्चरेत् ।।३४।।
क्षिप्तोऽवमानितोऽसद्भिः प्रलब्धोऽसूयतोऽपि वा ।
ताडितः संनिरुद्धो वा वृत्त्या वा परिहापितः ।।३५।।
विष्ठितो मूत्रितो वाज्ञैर्बहुधैवं प्रकल्पितः ।
श्रेयस्कामः कृच्छ्रगत आत्मनात्मानमुद्धरेत् ।।३६।।
संमाननं परां हानिं योगर्द्धेः कुरुते यतः ।
जनेनावमतो योगी योगसिद्धिं च विन्दति ।।३७।।
तथा चरेत वै योगी सतां धर्ममदूषयन् ।
जना यथावमन्येरन्गच्छेयुर्नैव सङ्गतिम् ।।३८।।
जरायुजाण्डजादीनां वाङ्मनःकायकर्मभिः ।
युक्तः कुर्वीत न द्रोहं सर्वसङ्गांश्च वर्जयेत् ।। ३९।।

[ना० प० उ० ५/२३-३१]

अब्धिवद्धृतमर्यादा भवन्ति विशदाशयाः ।
नियतिं न विमुञ्चन्ति महान्तो भास्करा इव ।।४०

पांसुना च प्रतिच्छन्नशून्यागारप्रतिश्रयः ।
वृक्षमूलनिकेतो वा त्यक्तसर्वप्रियाप्रियः ।।४१।।

यत्रास्तमितशायी स्यान्निरग्निरनिकेतनः ।
यथालब्धोपजीवी स्यान्मुनिर्दान्तो जितेन्द्रियः ।।४२।।

निष्क्रम्य वनमास्थाय ज्ञानयज्ञो जितेन्द्रियः ।
कालकांक्षी चरन्नेव ब्रह्मभूयाय कल्पते ।।४३।।

अभयं सर्वभूतेभ्यो दत्त्वा चरति यो मुनिः ।
न तस्य सर्वभूतेभ्यो भयमुत्पद्यते क्वचित् ।।४४।।

निर्मानश्चानहंकारो निर्द्वन्द्वश्छिन्नसंशयः ।
नैव क्रुध्यति न द्वेष्टि नानृतं भासते गिरा ।।४५।।

पुण्यायतनचारी च भूतानामविहिंसकः ।
काले प्राप्ते भवेद्भैक्ष्यं कल्प्यते ब्रह्मभूयसे ।।४६।।

वानप्रस्थगृहस्थाभ्यां न संसृज्येत कर्हिचित् ।
अज्ञातचर्यां लिप्सेत न चैनं हर्ष आविशेत् ।
अध्वासूर्येण निर्दिष्टः कीटवद्विचरेन्महीम् ।।४७।।

[ना० प० उ० ५/१३-१९ $\frac{१}{२}$]

काषायवासाः सततं ध्यानयोगपरायणः ।
ग्रामान्ते वृक्षमूले वा वसेद्देवालयेऽपि वा ।।४८।।

भैक्षेण वर्तयेन्नित्यं नैकान्नाशी भवेत्क्वचित् ।
चित्तशुद्धिर्भवेद्यावत्तावन्नित्यं चरेत्सुधीः ।।४९।।

ततः प्रव्रज्य शुद्धात्मा संचरेद्यत्रकुत्रचित् ।
बहिरन्तश्च सर्वत्र संपश्यन्हि जनार्दनम् ।।५०।।

सर्वत्र विचरेन्मौनी वायुवद्वीतकल्मषः ।
समदुःखसुखः क्षान्तो हस्तप्राप्तं च भक्षयेत् ।।५१।।

[ना० प० उ० ५/३४-३७]

त्यक्तसङ्गो जितक्रोधो लघ्वाहारो जितेन्द्रियः ।
पिधाय बुद्ध्या द्वाराणि मनो ध्याने निवेशयेत् ।।५२।।

शून्येष्वेवावकाशेषु गुहासु च वनेषु च ।
नित्ययुक्तः सदा योगी ध्यानं सम्यगुपक्रमेत् ।।५३।।
आतिथ्यश्राद्धयज्ञेषु देवयात्रोत्सवेषु च ।
महाजनेषु सिद्ध्यर्थी न गच्छेद्योगवित्क्वचित् ।।५४।।
यथैनमवमन्यन्ते जनाः परिभवन्ति च ।
तथा युक्तश्चरेद्योगी सतां वर्त्म न दूषयेत् ।।५५।।

[ना०प०उ० ६/१-४]

प्रियेषु स्वेषु सुकृतमप्रियेषु च दुष्कृतम् ।
विसृज्य ध्यानयोगेन ब्रह्माभ्येति सनातनम् ।।५६।।
यथा भावेन भवति सर्वभावेषु निःस्पृहः ।
तथा सुखमवाप्नोति प्रेत्य चेह च शाश्वतम् ।।५७।।
अनेन विधिना सर्वास्त्यक्त्वा संगाञ्शनैः शनैः ।
सर्वद्वन्द्वैर्विनिर्मुक्तो ब्रह्मण्येवावतिष्ठते ।।५८।।

[मनु० ७/९-८१]

रथ्यायां बहुवस्त्राणि भिक्षा सर्वत्र लभ्यते ।
भूमिः शय्याऽस्ति विस्तीर्णा यतयः केन दुःखिताः ।।५९।।
नापृष्टः कस्यचिद्ब्रूयान्न चान्यायेन पृच्छतः ।
जानन्नपि हि मेधावी जडवल्लोक आचरेत् ।।६०।।

[सं० उ० २/९९,१०२]

अन्यानथाष्टौ पुनरुत्थितेऽस्मिन्स्वकर्मलिप्सुर्विहरेद्वा वसेद्वा ।
देवाग्न्यागारे तरुमूले गुहायां वसेदसङ्गोऽलक्षितशीलवृत्तः ।
अनिन्धनो ज्योतिरिवोपशान्तो न चोद्विजेदुद्विजेद्यत्रकुत्र ।।६१।।

[शाट्या०उ० २०/२१]

विद्वान्स्वदेशमुत्सृज्य संन्यासानन्तरं स्वतः ।

कारागारविनिर्मुक्तचोरवद्दूरतो वसेत् ।।६२।। [मैत्रे०उ० २/११]

सर्वेषु कालेषु लाभालाभौ समौ कृत्वा करपात्रमाधूकरेणान्नमश्नन्मेदोवृद्धिमकुर्वन्कृशीभूत्वा ब्रह्माहमस्मीतिभावयन्गुर्वर्थं ग्राममुपेत्य ध्रुवशीलोऽष्टौ मास्येकाकी चरेद् द्वावेव वाचरेत् ।।६३।। [प०प०उ०]

अनिकेतश्चरेत्। भिक्षाशी यत्किंचिन्नाद्यात्।
लवैकं न धावयेज्जन्तुसंरक्षणार्थं वर्षवर्जमिति।
स्नानं पानं तथा शौचमद्भिः पूताभिराचरेत्।
नदीपुलिनशायी स्याद्देवागारेषु वा स्वपेत्।।६४।।
नात्यर्थं सुखदुःखाभ्यां शरीरमुपतापयेत्।
स्तूयमानो न तुष्येत निन्दितो न शपेत्परान्।।६५।।

[क०रु०उ० ३-४]

वर्षासु ध्रुवशीलोऽष्टौ मासानेको यतिश्चरेत्।
द्वावेव वा चरेद् द्वावेव वा चरेदिति।।६६।। [आरु० उ० ४]
"ग्राम एकरात्रवासिनो नगरतीर्थावसथेषु पञ्चरात्रवासिन उदरादिपात्रिणोऽभिशस्तपतितवर्जं चातुर्वर्ण्यं भैक्षं चरन्त आत्मत्वेनावतिष्ठन्त इति ।।६७।। [पाराशर०]
एक एव चरेन्नित्यं ग्राममन्नार्थमाश्रयेत्।
उपेक्षकोऽसञ्चयिको मुनिर्ज्ञानसमन्वितः।।६८।।
शुद्धभावश्चरेद्धर्मं यत्र तत्राश्रमे रतः।
समः सर्वेषु भूतेषु न लिङ्गं धर्मकारणम्।।६९।।
अजिह्वः षण्डकः पङ्गुरन्धो बधिर एव च।
सद्भिश्च मुच्यतेऽसद्भिरज्ञानात्संसृतो द्विज।। ७०।।

[आग्ने० पु० १६१/२-३१/२,११,१३]

रक्तैकवासा दण्डी च बिभर्ति मृत्कमण्डलुम्।
सर्वत्र समदर्शी च स्मरेन्नारायणं सदा।।७१।।
करोति भ्रमणं नित्यं गेहे गेहे न तिष्ठति।
विद्यामन्त्रं च कस्मैचिन्न ददाति च लोभतः।।७२।।
करोति नाश्रमं भिक्षुः करोति नान्यवासनाम्।
करोति नान्यसङ्गं च निर्मोहः सङ्गवर्जितः।।७३।।
न स्वादु भुङ्क्ते लोभाच्च स्त्रीमुखं न हि पश्यति।
न वांछितं भक्ष्यवस्तु याचेत गृहिणं व्रती।।७४।।

[ब्र० वै० पु० ४/५९/७८-८१]

संन्यासी याति सायाह्ने क्षुधितो गृहिणां गृहम् ।
सदन्नं वा कदन्नं वा तद्दत्तं नैव वर्जयेत् ।। ७५।।
न याचते च मिष्ठान्नं न कुर्यात् कोपमेव च ।
न धनग्रहणं कुयदिकवासा निरीहितः ।।७६।।
शीतग्रीष्मसमानश्च लोभमोहविवर्जितः ।
तत्र स्थित्वैकरात्रं च प्रातरन्यत्स्थलं व्रजेत् ।।७७।।

[ब्र० वै० पु० ४/८३/८८-९०]

ग्रामान्ते वृक्षमूले वा वसेद्देवालयेऽपि वा ।
समं शत्रौ च मित्रे च तथा मानापमानयोः ।।७८।।

[कू० पु० २/२८/१६]

रागद्वेषविमुक्तात्मा समलोष्टाश्मकाञ्चनः ।
प्राणिहिंसानिवृत्तश्च मौनी स्यात्सर्वनिःस्पृहः ।।७९।।
दृष्टिपूतं न्यसेत्पादं वस्त्रपूतं जलं पिबेत् ।
शास्त्रपूतं वदेद्वाणीं मनःपूतं समाचरेत् ।।८०।।
नैकत्र निवसेद्देशे वर्षाभ्योऽन्यत्र भिक्षुकः ।
स्नानशौचरतो नित्यं कमण्डलुकरः शुचिः ।।८१।।
दम्भाहंकारनिर्मुक्तो निन्दापैशुन्यवर्जितः ।
आत्मज्ञानगुणोपेतो यतिर्मोक्षमवाप्नुयात् ।।८२।।

[कू० पु० २/२८/१८-२१]

त्रैवर्णिकांस्त्यजेत्सर्वानारंभानवनीपते ।
मित्रादिषु समो मैत्रः समस्तेष्वेव जन्तुषु ।।८३।।
जरायुजाण्डजादीनां वाङ्मनःकर्मभिः क्वचित् ।
युक्तं कुर्वीत न द्रोहं सर्वसङ्गांश्च वर्जयेत् ।।८४।।
एकरात्रस्थितिर्ग्रामे पञ्चरात्रस्थितिः पुरे ।
तथा तिष्ठेद्यथा प्रीतिर्द्वेषो वास्य न जायते ।।८५।।
प्राणयात्रा निमित्तं च व्यङ्गारे भुक्तवज्जने ।
काले प्रशस्तवर्णानां भिक्षार्थं पर्यटेद्गृहान् ।।८६।।

[वि०पु०३/९/२६-२९]

मनागपि न भूतानां यस्मादुत्पद्यते भयम् ।
सर्वभूतानि तस्येह प्रयच्छन्त्यभयं यतः ।।८७।।

एक एव चरेन्नित्यमनग्निरनिकेतनः ।
सिद्ध्यर्थमसहायः स्याद् ग्राममन्नार्थमाश्रयेत् ।।८८।।
जीवितं मरणं वाथ नाभिकाङ्क्षेत्क्वचिद्यतिः ।
कालमेव प्रतीक्षेत निर्देशं भृतको यथा ।।८९।।

[स्क० पु० का० ख० ४१/१६-१८]

गच्छेत्परिहरञ्जन्तून् पिबेत्कं वस्त्रशोधितम् ।
वाचं वदेदनुद्वेगां न क्रुध्येत्केनचित्क्वचित् ।।९०।।
चरेदात्मसहायश्च निरपेक्षो निराश्रयः ।
नित्यमध्यात्मनिरतो नीचकेशनखो वशी ।।९१।।

[स्क० पु० का० ख० ४१/२२-२३]

"समलोष्टाश्मकांचनास्त्रिवर्गप्रवृत्तेष्वसक्तबुद्धयः । अरिमित्रोदासीनानां तुल्यदर्शना स्थावरजरायुजाण्डजस्वेदजा नां भूतानां वाङ्मनःकर्मभिरनभिद्रोहिणोऽनिकेताः पर्वतपुलिनवृक्षमूल देवायतनान्यनुसंचरन्तो वा सार्थमुपेयुर्नगरं ग्रामं वा न क्रोधदर्पलोभमोहकार्पण्यदम्भपरिवादाभिमाननिवृत्तहिंसा इति" ।।९२।।

[वृ० ना० पु० १/४३/१२३-१२४]

दीक्षामुपेयात्काषायवासाः। ऊर्ध्वबाहुर्विमुक्तमार्गो भवति ।
अनिकेतश्चरेद्भिक्षाशी । निदिध्यासनं दध्यात् ।
पवित्रं धारयेज्जन्तुसंरक्षणार्थम् ।
नदीपुलिनशायी स्याद्देवागारेषु बाह्यतः ।
नात्यर्थं सुखदुःखाभ्यां शरीरमुपतापयेत् ।।९३।।
स्नानं पानं तथा शौचमद्भिः पूताभिराचरेत् ।
स्तूयमानो न तुष्येत निन्दितो न शपेत्परान् ।। ९४।।
भिक्षादि वैदलं पात्रं स्नानद्रव्यमवारितम् ।
एवं वृत्तिमुपासीनो यतेन्द्रियो जपेत्सदा ।
विश्वाय मनुसंयोगं मनसा भावयेत्सुधीः ।।९५।।

[कु० उ० ११-१३-१/२]

अभिपूजितलाभादुद्विजेत् । शून्यागारनिकेतनः स्यात् । वृक्षमूलनिकेतनो वा न ग्रामे द्वितीयां रात्रिमावसेत् । कौपीनाच्छादनमात्रमेव वसनमादद्यात्। दृष्टिपूतं न्यसेत् पादम् । वस्त्रपूतं जलमादद्यात् । सत्यपूतं वदेत् । मनःपूतं

समाचरेत् । मरणं नाभिकामयेत् जीवितञ्च । अतिवादांस्तितिक्षेत् । न कञ्चनावमन्येत् । निराशी स्यात् । निर्नमस्कारः ।।९६।।

[वृहद्विष्णु० ९६/८-१२,१४-२२]

एकशाटीपरिवृतोऽजिनेन वा गोप्रूलनैस्तृणैर्वेष्टितशरीरः स्थण्डिलशाय्यनित्यां वसतिं वसेत् ग्रामान्ते देवगृहे शून्यागारे वृक्षमूले वा मनसा ज्ञानमधीयमानः। अरण्यनित्यो न ग्राम्यपशूनां संदर्शने विहरेत् ।।" ९७।। [वसिष्ठ० १०/८-९]

ग्रामान्ते वृक्षमूले च नित्यकालनिकेतनः ।
पर्यटेत्कीटवद्भूमिं वर्षास्वेकत्र संविशेत् ।।९८।।

[विष्णु० ४/५]

आत्मन्येवाऽऽत्मना बुद्ध्या परित्यक्तशुभाशुभः ।
अव्यक्तलिङ्गो व्यक्तश्च चरेद्भिक्षुः समाहितः ।।९९।।
प्राप्तपूजो न संतुष्येदलाभेऽव्यक्तमत्सरः।
त्यक्ततृष्णः सदा विद्वान्मूकवत्पृथिवीं चरेत् ।।१००।।

[विष्णु० ४/२६-२७]

कुटुम्बं पुत्रदारांश्च वेदाङ्गानि च सर्वशः ।
केशान्यज्ञोपवीतं च त्यक्त्वा गूढश्चरेन्मुनिः ।।१०१।। [वाष्कल०]
न संनिकाशयेद्धर्मं विविक्ते चारजाश्चरेत् ।
शून्यागारमरण्यं वा वृक्षमूलं नदीं तथा ।।१०२।।
प्रतिश्रयार्थं सेवेत पार्वतीं वा पुनर्गुहाम् ।
ग्रामैकरात्रिको ग्रीष्मे वर्षास्वेकत्र वा वसेत् ।।१०३।।
अध्वासूर्येण निर्दिष्टः कीटवच्च चरेन्महीम् ।
दयार्थं चैव भूतानां समीक्ष्य पृथिवीं चरेत् ।।१०४।।
संचयांश्च न कुर्वीत स्नेहवासं च वर्जयेत् ।
पूताभिरद्भिर्नित्यं वै कार्यं कुर्वीत मोक्षवित् ।
उपस्पृशेदुद्धृताभिरद्भिश्च पुरुषः सदा ।।१०५।।

[महा० आश्व० ४६/२५-२८१/२]

शून्यगृहे देवगृहे गुहायां गिरिगह्वरे ।
यत्र वा रमते बुद्धिस्तत्रासीत प्रसन्नधीः ।।१०६।।

योगशास्त्रोक्तमार्गेण कृतासनपरिग्रहः ।
योगं युञ्जीत सततं संध्यास्वपि विशेषतः ।।१०७।। [शंख०]

"पर्यटनशीलः स्यादात्मज्ञानार्थम् । तदवाप्योर्ध्वमेकस्थानरतिस्तदभ्यासपरो नैकदेशे मूत्रपुरीषे चेति ।।" १०८।। [शंख०]

वासे बहूनां कलहो भवेद् वार्ता द्वयोरपि ।
एक एव चरेत् तस्मात् कुमार्या इव कङ्कणः ।।१०९।।

[श्रीमद्भा०११/९/१०]

एकश्चरेन्महीमेतां निःसङ्गः संयतेन्द्रियः ।
आत्मक्रीड आत्मरत आत्मवान् समदर्शनः ।।११०।।
यदेतदात्मनि जगन्मनोवाक्प्राणसंहतम् ।
सर्वं मायेति तर्केण स्वस्थस्त्यक्त्वा न तत् स्मरेत् ।।१११।।
ज्ञाननिष्ठो विरक्तो वा मद्भक्तो वानपेक्षकः ।
सलिङ्गानाश्रमांस्त्यक्त्वा चरेदविधिगोचरः ।।११२।।
बुधो बालकवत् क्रीडेत् कुशलो जडवच्चरेत् ।
वदेदुन्मत्तवद् विद्वान् गोचर्यां नैगमश्चरेत् ।।११३।।
वेदवादरतो न स्यान्न पाखण्डी न हैतुकः ।
शुष्कवादविवादे न कंचित् पक्षं समाश्रयेत् ।।११४।।
नोद्विजेत जनाद्धीरो जनं चोद्वेजयेन्न तु ।
अतिवादांस्तितिक्षेत नावमन्येत कंचन ।।
देहमुद्दिश्य पशुवद् वैरं कुर्यान्न केनचित् ।।११५।।

[श्रीमद्भा० ११/१८/२७-३१]

ग्रामैकरात्रं विहरेद्दीर्घमासीत वा क्वचित् ।
अन्धवज्जडवच्चापि बधिरोन्मत्तमूकवत् ।।११६।।
नामगोत्रादिचरणं देशं वंशं श्रुतं कुलम् ।
वयो वृत्तं व्रतं शीलं ख्यापयेन्नैव सद्यतिः ।।११७।।
प्रख्यापनाद्यतेर्हानिः पुण्यस्य स्यान्न संशयः ।
गूढधर्माश्रितो विद्वानज्ञातचरिते स्थितः ।
अमूढो मूढरूपेण चरेद्धर्ममदूषयन् ।।११८।।

[अत्रि०]

*

# चातुर्मास्य एकत्र वासविषये संकल्पादिनियमाः

जले जीवा स्थले जीवा आकाशे जीवमालिनी ।
जीवमालाकुले लोके वर्षास्वेकत्र संवसेत् ।।१।। [यम०]
"चतुरो मासान्वार्षिकान्ग्रामे नगरे वाऽपि वसेत् ।।"२।।

[काठ० ब्रा०]

'वार्षिकांश्चतुरो मासान्विहरेन्न यतिः क्वचित् ।
बीजाङ्कुराणां जन्तूनां हिंसा तत्र यतो भवेत् ।।३।।

[स्क० पु० का० ख० ४१/२१]

"विरक्तः सन्यो वर्षासु ध्रुवशीलो".।।४।।

[ना०प० उ० ७/१]

"चतुरो मासान्वार्षिकान्ग्रामे वा नगरे वापि वसेत् ।
पक्षा वै मासो इति द्वौ मासौ वा वसेत् ।।५।।

[सं० उ० १/१]

"चतुरो मासान्ध्रुवशीलतः स्यात्स
यावत्सुप्तोऽन्तरात्मा पुरुषो विश्वरूपः ।।"६।।

[शाट्या० उ० २०]

"आषाढ्यां पौर्णमास्यां च चातुर्मास्यव्रतं चरेत् ।।"७।।

[आग्ने० पु० १६१/३०]

"वर्षास्वेकस्थः ।।८।।

[बौधायन० २/६/२३]

"एकरात्रे वसेद् ग्रामे नगरे पञ्चरात्रकम् ।
वर्षाभ्योऽन्यत्र वर्षासु मासांस्तु चतुरो वसेत् ।।"९।। [कण्व०]
यावद्वर्षत्यकालेऽपि यावत्क्लिन्ना च मेदिनी ।
तावन्न विचरेद्भिक्षुः स्वधर्मं परिपालयन् ।।१०।।

[मेधातिथि०]

"चातुर्मास्यं विनैकत्र वसेन्नाऽसावनापदि ।।"११।।

[स्क० पु० वै० ख० वा० मा० २३/२३]

"द्वादश्यां पौर्णमास्यां वा कुर्यात्संकल्पमात्मवित्" ।।१२।। [अत्रि०]
असति प्रतिबन्धे तु मासान्वै वार्षिकानिह ।
निवसामीति संकल्प्य मनसा बुद्धिपूर्वकम् ।।१३।।
प्रायेण प्रावृषि प्राणिसंकुलं वर्त्म दृश्यते ।
आषाढ्यादि चतुर्मास्यं कार्तिक्यन्तं तु संवसेत् ।।१४।।
माधवश्चतुरो मासान्सर्वभूतहिताय वै ।
स्वापं यास्यति शेषाङ्के लक्ष्म्या सह जगत्पतिः ।।१५।।
सुप्तश्चैवोत्थितो यावन्न भवेत्स सनातनः ।
अहं तावन्निवत्स्यामि सर्वभूतहिताय वै ।।१६।। [अत्रि०]
नासमानसहायेषु निवसेद्योगवित्क्वचित् ।
वसेत्समानशीलेषु सुशीलेषु तपस्विषु ।।१७।। [अत्रि०]
एको भिक्षुर्यथोक्तस्तु द्वावेव मिथुनं स्मृतम् ।
त्रयो ग्रामः समाख्यात ऊर्ध्वं तु नगरायते ।।१८।।
नगरं तु न कर्तव्यं ग्रामो वा मिथुनं तथा ।
एतत्त्रयं प्रकुर्वाणः स्वधर्माच्च्यवते यतिः ।।१९।।
वासे बहूनां कलहो भवेद्वार्ता द्वयोरपि ।
एक एव चरेत्तस्मात्कुमार्या इव कङ्कणः ।।२०।।
राजवार्तादि वा तेषां भिक्षावार्ता परस्परम् ।
स्नेहपैशुन्यमात्सर्यं संनिकर्षात्प्रवर्तते ।।२१।।
निरामयं निराबाधं प्रसन्नसलिलान्वितम् ।
मेध्यान्नं बहुलं चैव धनिनां कुलसंकुलम् ।।२२।।
भक्ता यत्र जनाः सर्वे स्ववृत्तिपरिपालकाः ।
श्रद्दधाना मुदा युक्ताः शान्ताः कल्याणवादिनः ।।२३।।
प्रयच्छन्ति यथान्यायं भिक्षां सर्वरसान्विताम् ।
भिक्षवे पुष्कलं साधु यच्चान्यद्धर्मसाधनम् ।
अयाचिता नियच्छन्ति तं देशं यत्नतो व्रजेत् ।।२४।।

[दक्ष०]

चतुरोऽयं वसेन्मासान् द्वौ वा कौशिकवार्षिकौ ।
वृद्धाननुक्रमेणेव नमस्कृत्य विधानतः ।।२५।।

अनेन विधिना भिक्षुराषाढ्यां सुसमाहितः ।
स्थानाभावाद् व्रजेत्तावद्यावद्भवति पञ्चमी ।।२६।।
प्रायश्चित्तेन युज्येत पञ्चम्यूर्ध्वं व्रजेद्यदि ।
कृच्छ्रमेकं चरेद्भिक्षुर्यदि ह्यार्तो न गच्छति ।।२७।।
तेषु मासेषु केशादीनृतुसंधौ न वापयेत् ।
नदीं च न तरेत्तेषु क्रोशादूर्ध्वं न च व्रजेत् ।।२८।।
वापयेद्यदि केशादीनुत्तरेद्यदि वा नदीम् ।
प्राजापत्यं चरेच्छुद्ध्यै प्राणायामशतत्रयम् ।।२९।।
विस्तीर्णे ग्रामसीमान्ते क्रोशादूर्ध्वं व्रजेद्यदि ।
प्राणायामांस्त्रिंशत्कृत्वा जपेत्त्रिकशतत्रयम् ।।३०।।
स्थितियोग्यान्बहून्ग्रामान्यदि वर्षासु लङ्घयेत् ।
प्रत्येकैकं चरेत्कृच्छ्रमेतत्पापात्प्रमुच्यते ।।३१।।
वर्षाभेदं यतिः कुर्याद्यदि कश्चिदनापदि ।
प्राजापत्येन कृच्छ्रेण मुच्यते नात्र संशयः ।।३२।। [अत्रि०]
प्रणतानां यतिर्ब्रूयादाशिषं व्यासशासनात् ।
नारायणेति च ब्रूयात्प्रणतायुर्विवृद्धये ।।३३।।
धर्मसंकरसंकीर्णे स्थाने सोपद्रवे यतिः ।
मुहूर्तं नोपतिष्ठेत यत्र धर्मः पराङ्मुखः ।।३४।।
तस्करोपद्रुते ग्रामे ब्रह्महत्यादिदूषिते ।
दुर्भिक्षे राष्ट्रभङ्गे वा वर्षास्वप्याशु तं त्यजेत् ।।३५।।

[यति० समु०]

माता पिता स्वसा भ्राता स्नुषा जाया सुतस्तथा ।
ज्ञातिबन्धुसुहृद्वर्गो दुहिता तत्सुतादयः ।।३६।।
यस्मिन्देशे वसन्त्येते न तत्र दिवसं वसेत् ।
द्वेषः शोको भवेत्तत्र रागहर्षादयो मलाः ।।३७।।
अश्रुपातं यदा कुर्याद्भिक्षुः शोकेन चार्दितः ।
योजनानां शतं गत्वा तदा पापात्प्रमुच्यते ।।३८।। [अत्रि०]
"चोरैरुपद्रुतं देशं दुर्भिक्षं व्याधिपीडितम् ।
चक्रेणान्येन च क्रान्तं वर्षास्वप्याशु तं त्यजेत् ।।३९।।

मुहूर्तमपि नाऽऽसीत देशे सोपद्रवे यतिः ।
उपद्रुते तु मनसि समाधिर्नैव जायते ।।४०।।
अधार्मिकनृपग्रामे पाखण्डजनसंकुले ।
मुहूर्तमपि नाऽऽसीत यत्र धर्मो विलुप्यते ।।४१।।
चतुष्कोशान्तरा यत्र नदी भवति कुत्रचित् ।
पक्षान्ते तत्र गन्तव्यमापस्तम्बवचो यथा ।।४२।।
श्राद्धे निमन्त्रितो गच्छेन्नदीलङ्घनवर्जितम् ।
सायमागत्य निवसेत्स्वाश्रमे कल्पिते गृहे ।।४३।।
यत्तीर्थमनुसंप्राप्य चित्तमस्य प्रसीदति ।
तत्र तिष्ठेन्नरो विद्वान्मोक्षमार्गे व्यवस्थितः ।।४४।।
चातुर्मास्ये च कार्तिक्यां क्षौरं कार्यं न चान्तरा ।
देशकालाविरोधेन भाद्र्यामपि क्वचिन्मतम् ।।४५"।। [याज्ञ०]
कार्तिक्यां वापयित्वा तु स्नापयित्वा त्रिविक्रमम् ।
परस्परं तु संपूज्य क्षामयित्वा परस्परम् ।।४६।।
मासद्वयं चतुष्कं वा एकत्र निवसेद्यतिः ।
नैकत्र निवसेद्ग्रामे वर्षाभ्योऽन्यत्र सद्यतिः ।।४७।।
चतुरोऽयं वसेन्मासान्द्वौ वा कौशिकवार्षिकौ ।
कक्षोपस्थशिखावर्जमृतुसंधिषु वापयेत् ।।४८।। [अत्रि०]
"ऊर्ध्वं वार्षिकाभ्यां मासाभ्यां नैकत्र स्थानवासी स्यात्"।।४९।। [शंख०]
अष्टौ मासान्विहारः स्याद्यतीनां संयतात्मनाम् ।
एकत्र चतुरो मासान्वार्षिकान्निवसेत्पुनः ।।५०।।
अविमुक्ते प्रविष्टानां विहारस्तु न विद्यते ।
न देहो भविता तत्र दृष्टं शास्त्रं पुरातनैः ।।५१।।
मोक्षोऽप्यसंशयं तत्र पञ्चत्वं तु गतस्य वै ।
हन्यमानोऽपि यो विद्वान्सेवेद्विघ्नशतैरपि ।
स याति परमं स्थानं यत्र गत्वा न शोचति ।।५२।।
गङ्गाकूले वसेन्नित्यं भिक्षुर्मोक्षपरायणः ।
सिद्धक्षेत्रं तु तज्ज्ञेयं यावद्धनुशतत्रयम् ।।५३।। [म०पु०]

ब्रह्मादिदेवलोकानां मुक्तेश्च प्राप्तये नृणाम् ।
गङ्गैव परमो हेतुः कलिकाले विशेषतः ।।५४।।
ब्राह्मणस्य हि देहोऽयं नोपभोगाय जायते ।
इह क्लेशाय महतो प्रेत्यानन्तसुखाय च ।।५५।। [भ० पु०]
"परब्रह्मणि संन्यस्य कुर्वन्कर्माणि शक्तितः ।
योगाभ्यासप्रधानस्तु जपशीलः क्षमापरः ।।५६।।
पर्यटेत्पुण्यतीर्थानि देवतायतनानि च ।
कृच्छ्रचान्द्रायणादीनि कुर्याच्छुद्ध्यर्थमात्मनः ।।५७।।
अनन्धोऽव्याधितोऽपङ्गुः षड्रात्रं न वसेत्क्वचित् ।
धर्मधीरस्य देशाच्च वसेद्वा सार्वकालिकम् ।।५८।।
श्रावणं मासमारभ्य यावन्मासचतुष्टयम् ।
वसेयुः सर्वयतय एकत्रैवेति निश्चयः ।।५९।। [लिखित०]
"ऊर्ध्वरिता ध्रुवशीलो वर्षासु ।।"६०।। [गौतम०]
"वर्षाभ्योऽन्याप्येकत्र वसेदेव"।।६१।। [विश्वामित्र०]
"शून्यागारे वृक्षमूले वा वर्षास्वेकत्र निवसेत् ।।६२।। [गालव०]
"न चिरमेकत्र वसेदन्यत्र वार्षिकान् ।
श्रावणादिचतुर्मासिको वार्षिकः ।
तस्मिन्न यायी स्यात् ।।६३।। [देवल०]
ग्रीष्महैमन्तिकान्मासानष्टौ प्रायेण पर्यटेत् ।
दयार्थं सर्वभूतानां वर्षास्वेकत्र संवसेत् ।।६४"।। [मनु०]
"धर्मवृद्धो भूत्वा भरणादेकत्रापि वसेत् ।
अन्यथा वृजिनशीलः स्यादित्याचार्याः ।।"६५।। [वृद्धमनु०]
ग्रैष्महैमन्तिकान्मासानष्टौ भिक्षुर्विपर्यटेत् ।
दयार्थं सर्वभूतानां वर्षास्वेकत्र संवसेत् ।।६६।।
चातुर्मास्यान्वसेद् ग्रामे श्रद्धाभक्तिसमन्वितः ।
स्थितिभङ्गमकुर्वन्हि शाश्वतं पदमाप्नुयात् ।।६७।।
यावद्वर्षत्यकालेऽपि यावत्क्लिन्ना च मेदिनी ।
ग्रामसीमादिकं नेयाद्विस्तीर्णे क्रोशतः परम् ।।६८।।[जावालि०]

प्रशस्तां मृत्तिकां शुष्कां गृह्णीयाच्छशिशुक्रयोः ।
द्वादश्यां मृदमादाय शुभं कर्मानुपालयन् ।।६९।।
यावद्वर्षत्यकालेऽपि यावत्क्लिन्ना च मेदिनी ।
ग्रामसीमादिकं नेयाद्विस्तीर्णं क्रोशतः परम् ।।७०।।
आषाढादीन् वसेन्मासांश्चतुरः कार्तिकोदयात् ।।७१।।

[मेधातिथि०]

ग्रामसीमादिकं नैव विस्तीर्णे क्रोशतः परम् ।
यदि कश्चित्प्रमादेन क्रोशमात्राधिकं व्रजेत् ।
प्राजापत्येन शुध्येत षोडशायुयमैस्तथा, ।।"७२।। [वृद्धजा०]
"न चिरमेकत्र वसेदन्यत्र वार्षिकान् ।
श्रावणादयश्चत्वारो मासा वार्षिका इति विश्वरूपः ।।७३।। [देवल०]
'ग्रामे नगरे पुरे वा प्राप्ते वर्षाकाले स्थितिमेव करोति भिक्षुस्तस्मिन्नवस्थाने ऊर्ध्वं कालं क्षणमपि स्थितिं कृत्वा प्राजापत्यं समाचरेत् ।।"७४।।

[सत्यकामजावाली ]

"यतीनां व्रतवृद्धानां स्वधर्ममनुवर्तिनाम् ।
विष्णुरूपेण वै कुर्यान्नमस्कारं दिने दिने ।।७५।।
यो भवेत्पूर्वसंन्यासी तुल्यो वा धर्मतो यतिः ।
नमस्कारार्चनादीनि कुर्यान्नान्यस्य कस्यचित् ।।७६।।
धर्मस्थानतिवृद्धांश्च देवांश्च प्रणमेद्यतिः ।
नान्यमाश्रमिणं कंचित् प्रशस्तमपि तं नमेत् ।।७७।।
सायं प्रातर्न तृप्येत न प्रसज्जेत भोजने ।
नेन्द्रियार्थेषु सज्जेत कदाचिदपि कर्मतः ।।७८।।
पन्थानमपि पृच्छेच्च भिक्षां देहीति च स्वयम् ।
तावदेव व्याहरणं शेषमन्यन्निषिध्यते ।। ७९।। [वसिष्ठ०]
"गूढधर्माश्रितो विद्वानज्ञानकरणे स्थितः ।
अमूढो मूढरूपेण चरेद्धर्ममदूषयन् ।।८०।।" [अत्रि०]
"वृद्धातुरवद्यथाकथंचित्स्थितिं सम्पादयेत् ।।"८१।। [कपिल०]

*

# संन्यासचातुर्विध्यम्

संन्यासभेदैराचारभेदः कथमितीति चेत्तत्त्वतस्त्वेक एव संन्यासः अज्ञानेनाशक्तिवशात् कर्मलोपश्च त्रैविध्यमेत्य वैराग्यसंन्यासो ज्ञानसंन्यासो ज्ञानवैराग्यसंन्यासः कर्मसंन्यासश्चेति चातुर्विध्यमुपागतः ।।

## वैराग्यसंन्यासः

तद्यथेति दुष्टमदनाभावाच्चेति विषयवैतृष्ण्यमेत्य प्राक्पुण्यकर्मवशात् संन्यस्तः स वैराग्यसंन्यासी ।।

## ज्ञानसंन्यासः

शास्त्रज्ञानात्पापपुण्यलोकानुभवश्रवणात्प्रपञ्चोपरतः क्रोधेर्ष्यासूयाहंकाराभिमानात्मकसर्वसंसारं निर्वृत्य दारैषणाधनैषणालोकैषणात्मकदेहवासनां शास्त्रवासनां लोकवासनां त्यक्त्वा वमनान्नमिव प्रकृतीयं सर्वमिदं हेयं मत्वा साधनचतुष्टयसम्पन्नो यः संन्यस्यति स एव ज्ञानसंन्यासी ।।

## ज्ञानवैराग्यसंन्यासः

क्रमेण सर्वमभ्यस्य सर्वमनुभूय ज्ञानवैराग्याभ्यां स्वरूपानुसंधानेन देहमात्रावशिष्टः संन्यस्य जातरूपधरो भवति स ज्ञानवैराग्यसंन्यासी ।।

## कर्मसंन्यासः

ब्रह्मचर्यं समाप्य गृही भूत्वा वानप्रस्थाश्रममेत्य वैराग्याभावेऽप्याश्रमक्रमानुसारेण यः संन्यस्यति स कर्मसंन्यासी । ब्रह्मचर्येण संन्यस्य संन्यासाज्जातरूपधरो वैराग्यसंन्यासी । विद्वत्संन्यासी ज्ञानसंन्यासी विविदिषासंन्यासी कर्मसंन्यासी ।।

# निमित्तानिमित्तभेदेन कर्मसंन्यासस्य द्वैविध्यम्

कर्मसंन्यासोऽपि द्विविधः निमित्तसंन्यासोऽनिमित्तसंन्यासश्चेतिं । निमत्तस्त्वातुरः। अनिमित्तः क्रमसंन्यासः । आतुरः सर्वकर्मलोपः प्राणस्योत्क्रमणकालसंन्यासः स निमित्तसंन्यासः । द्ढाङ्गो भूत्वा सर्वं कृतकं नश्वरमिति देहादिकं सर्वं हेयं

प्राप्य हंसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् । नृषद्वरसद्वृतस - द्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं वृहत् । ब्रह्मव्यतिरिक्तं सर्वं नश्वरमिति निश्चित्याथो क्रमेण यः संन्यस्यति स संन्यासोऽनिमित्तसंन्यासः ।।

[ना० प० उ० ५/१ ]

## कुटीचकादिभेदेन संन्यासः षड्विधः

संन्यासः षड्विधो भवति । कुटीचको बहूदको हंसः परमहंसः तुरीयातीतोऽवधूतश्चेति ।।

### कुटीचकलक्षणम्

कुटीचकः शिखायज्ञोपवीती दण्डकमण्डलुधरः पितृमातृगुर्वाराधनपरः पिठरखनित्रशिक्यादिमन्त्रसाधनपरः एकत्रान्नादनपरः श्वेतोर्ध्वपुण्ड्रधारी त्रिदण्डः ।।

[ना० प० उ० ५/१ ] सं० उ० २/१ ]

कुटीचराः स्वपुत्रगृहेषु भिक्षाचर्यं चरन्तमात्मानं प्रार्थयन्ते ।। [आश्र० उ० ]

कुटीचका नाम गौतम-भरद्वाज-याज्ञवल्क्य-वसिष्ठप्रभृतयो अष्टौ ग्रासांश्चरन्तो योगमार्गे मोक्षमेव प्रार्थयन्ते ।। [भि० उ० ]

**पुत्रस्य भ्रातृपुत्रस्य भ्रातृदौहित्रयोरपि ।**
**तदुपान्तकुटीस्थो यः स भैक्ष्यवृत्तिभुग्द्विजः ।।१।।**
**प्रातिचार्यकृतः सोपि यो वासः पूतवारिणः ।**
**कन्थात्रिदण्डभृच्छान्त आत्मज्ञः स कुटीचरः ।।२।।**

[वृहत्पारा० धर्म० १०/२१-२२]

### बहूदकलक्षणम्

बहूदकः शिखादिकन्थाधरस्त्रिपुण्ड्रधारी कुटीचकवत्सर्वसमो मधुकरवृत्त्याष्टकवलाशी ।। [ना० प० उ० ५/१] [सं० उ० २/१ ]

बहूदकास्त्रिदण्डकमण्डलुशिक्यपक्षजलपवित्रपात्रपादुकासनशिखायज्ञोपवीत-कौपीनकाषायवेषधारिणः साधुवृत्तेषु ब्राह्मणकुलेषु भैक्षाचर्यं चरन्त आत्मानं प्रार्थयन्ते ।। [आश्र० उ० ]

अथ बहूदका नाम त्रिदण्डकमण्डलुशिखायज्ञोपवीतकाषायवस्त्रधारिणो ब्रह्मर्षिगृहे मधुमांसं वर्जयित्वाऽष्टौ ग्रासान्भैक्षाचरणं कृत्वा योगमार्गे मोक्षमेव प्रार्थयन्ते ॥

[भि० उ० ]

**ज्ञेयो बहूदको नाम यः पवित्रितपादुकः ।**
**शिखासनोपवीतानि धातुकाषायवस्त्रभृत् ।।१।।**
**साधुवृत्तिर्द्विजौकस्तु भिक्षाभागात्मचिन्तकः ।**
**बहूदकस्त्वयं ज्ञेयो स परिव्राट् त्रिदण्डभृत् ।।२।।**

[वृहत्पारा० धर्म० १०/२३-२४]

## हंसलक्षणम्

हंसो जटाधारी त्रिपुण्ड्रोर्ध्वपुण्ड्रधारी असंक्लृप्तमाधुकरान्नाशी कौपीनखण्डतुण्डधारी ॥

[ना० प० उ० ५/१] [सं० उ० २/१]

हंसा एकदण्डधराः शिखावर्जिता यज्ञोपवीतधारिणः शिक्यकमण्डलुहस्ता ग्रामैकरात्रवासिनो नगरे तीर्थेषु पञ्चरात्रं वसन्त एकरात्रद्विरात्रकृच्छ्रचान्द्रायणादि चरन्त आत्मानं प्रार्थयन्ते ॥

[आश्र०उ० ]

अथ हंसा नाम ग्राम एकरात्रं नगरे पञ्चरात्रं क्षेत्रे सप्तरात्रं तदुपरि न वसेयुः। गोमूत्रगोमयाहारिणो नित्यं चान्द्रायणपरायणा योगमार्गे मोक्षमेव-प्रार्थयन्ते॥

[भि०उ० ]

**एकदण्डधरा हंसाः शिखोपवीतधारिणः ।**
**वार्याधारकराः शान्ता भूतानामभयप्रदाः ।।१।।**
**वसन्त्येकक्षपां ग्रामे नगरे पञ्च शर्वरीः ।**
**कर्शयन्तो व्रतैर्देहमात्मध्यानरताः सदा ।।२।।**

[वृहत्पारा ०धर्म० १०/२५-२६]

## परमहंसलक्षणम्

परमहंसः शिखायज्ञोपवीतरहितः पञ्चगृहेष्वेकरात्रान्नादनपरः करपात्री । एककौपीनधारी शाटीमेकामेकं वैणवं दण्डमेकशाटीधरो वा भस्मोद्धूलनपरः सर्वत्यागी ॥

[ना० प० उ० ५/१ सं० उ० २/१]

"तत्र परमहंसा नाम एकदण्डधरा मुण्डा अभया अपरिग्रहा अयज्ञोपवीतिनो ज्ञानशिक्षा ज्ञाननिष्ठा ज्ञानयज्ञोपवीतिनो ब्रह्मनिष्ठा आत्मरताः ।

आत्मतृप्ता आत्मानं सर्वं पश्यन्त इति ।।" [पञ्चरा०]

अथ परमहंसा नाम संवर्तकारुणिश्वेतकेतुजडभरतदत्तात्रेयशुकवामदेव-हारीतकप्रभृतयोऽष्टौ ग्रासांश्चरन्तो योगमार्गे मोक्षमेव प्रार्थयन्ते ।। वृक्षमूले शून्यगृहे श्मशानवासिनो वा साम्बरा वा दिगम्बरा वा । न तेषां धर्माधर्मौ लाभालाभौ शुद्धाशुद्धौ द्वैतवर्जिताः समलोष्टाश्मकाञ्चनाः सर्ववर्णेषु भैक्षाचरणं कृत्वा सर्वत्रात्मैवेति पश्यन्ति ।। [भि० उ०]

तत्र परमहंसा नाम एकदण्डधरा मुण्डास्तथा कौपीनवाससोऽव्यक्तलिङ्गा अव्यक्ताचारा अनुन्मत्ता उन्मत्तवदाचरन्तः शिखायज्ञोपवीतत्रिदण्डकमण्डलुकपालानां च त्यागिनः शून्यागारदेवगृहवासिनो न तेषां धर्मो नाधर्मो न सत्यं नापि नानृतं सर्वसहाः सर्वसमाः समलोष्टाश्मकाञ्चना उपपन्नमात्राहाराश्चातुर्वर्ण्यं भैक्षं चरन्त आत्मानं मोक्षयन्त इति ।। [काण्वा० ]

शब्दस्पर्शरूपरसगंधानपि स्मरन्ति न ।
निन्दागर्वपरासूयादंभद्वेषादिवर्जिताः ।।
दर्पकामक्रोधलोभमोहाहंकारवर्जिताः ।
शरीरं शववत्स्वीयं पश्यन्तः शोकवर्जिताः ।।
एतच्छरीराभिमानत्यागाच्चिद्रूप आत्मनि ।
अज्ञानसंशयभ्रान्तिहेत्वज्ञानविवर्जिताः ।
नित्यमुक्ता अतो येऽस्मिन्विचरन्ति महीतले ।
ते हंसा परमा ज्ञेयास्तेषां निष्ठेयमीदृशी ।। [अद्वैता० ४/६८-७१]

नीरक्षीरविवेकज्ञो हंस एव न चेतरः ।
आत्मानात्मविवेकज्ञो यतिरेव न चेतरः ।। [अद्वैतानु०]

नैव धर्मी न चाधर्मी न चापीह शुभाशुभी ।
भिक्षाशी सर्ववर्णेषु तुल्यनिन्दास्तुतिःक्षमी ।
निस्तरङ्गवदम्भोधिस्थिरधीः सर्वदाऽऽत्मवान् ।
समः सर्वेषु भूतेषु परहंसः स उच्यते ।। [पौराणिकः ]

"एकदण्डधरा मुण्डाः कन्थाकौपीनवाससः ।
अव्यक्तलिङ्गिनो व्यक्ताः सर्वदैव च मौनिनः ।।

शिखादिरहिताः शान्ता उन्मत्तवेषधारिणः ।
भग्नशून्यामरौकस्सु वासिनो ब्रह्मचिन्तकाः ।।"

[बृहत्पारा० धर्म० १०/२७/२८]

## तुरीयातीतलक्षणम्

तुरीयातीतो गोमुखः फलाहारी । अन्नाहारी चेद्गृहत्रये देहमात्रावशिष्टो दिगम्बरः कुणपवच्छरीरवृत्तिकः ।। [ना० प० उ०५/१ ] [सं० उ० २/१ ]

## अवधूतलक्षणम्

अवधूतस्त्वनियमोऽभिशस्तपतितवर्जनपूर्वकं सर्ववर्णेष्वजगरवृत्त्याहारपरः स्वरूपानुसंधानपरः ।। [ना० प० उ०५/१ ] [सं० उ० २/१ ]

## जीवितातुरस्य क्रमसंन्यासः

आतुरो जीवति चेत्क्रमसंन्यासः कर्तव्यः ।।

## कुटीचकादीनां संन्यासविधिः

कुटीचक-बहूदक-हंसानां ब्रह्मचर्याश्रमादि तुरीयाश्रमवत् कुटीचकादीनां संन्यासविधिः ।।

## परमहंसादित्रयाणां संन्यासविधिः

परमहंसादित्रयाणां न कटिसूत्रं न कौपीनं न वस्त्रं न कमण्डलुर्न दण्डः सार्ववर्णैकभैक्षाटनपरत्वं जातरूपधरत्वं विधिः ।। संन्यासकालेऽप्यलंबुद्धि-पर्यन्तमधीत्य तदनन्तरं कटिसूत्रं कौपीनं दण्डं वस्त्रं कमण्डलुं सर्वमप्सु विसृज्याथ जातरूपधरश्चरेन्न कन्थावेशो नाध्येतव्यो न श्रोतव्यमन्यत्किंचित्प्रणवादन्यं न तर्कं पठेन्न शब्दमपि बृहच्छन्दान्नाध्यापयेन्न महद्वाचोविग्लापनं गिरा पाण्यादिना संभाषणं नान्यस्माद्वा विशेषेण न शूद्रस्त्रीपतितोदक्यासंभाषणं न यतेर्देवपूजा नोत्सवदर्शनं तीर्थयात्रावृत्तिः।। [ना० प० उ०५/१ ]

## कुटीचकादीनां भिक्षाविशेषः

पुनर्यतिविशेषः । कुटीचकस्यैकत्र भिक्षा बहूदकस्यासंक्लृप्तं माधुकरं हंसस्याष्टगृहेष्वष्टकवलं परमहंसस्य पंचगृहेषु करपात्रं फलाहारो गोमुखं तुरीया-तीतस्यावधूतस्याजगरवृत्तिः सार्ववर्णिकेषु । यतिर्नैकरात्रं वसेन्न कस्यापि

नमेत्तुरीयातीतावधूतयोर्न ज्येष्ठो यो न स्वरूपज्ञः स ज्येष्ठोऽपि कनिष्ठः।।

## तेषां प्राप्यस्थानानि

आतुरकुटीचकयोर्भूलोकः बहूदकस्य स्वर्गलोको हंसस्य तपोलोकः परमहंसस्य सत्यलोकस्तुरीयातीतावधूतयोः स्वात्मन्येव कैवल्यं स्वरूपानुसंधाने भ्रमरकीटन्यायवत् ।।

## संन्यासिभिः स्वरूपानुसंधानं विना नान्यत्किमपि कार्यम्

अयत्नेन प्राप्तमाहरन्ब्रह्मप्रणवध्यानानुसन्धानपरो भूत्वा सर्वकर्मनिर्मुक्तः कामक्रोधलोभमोहमदमात्सर्यादिकं दग्ध्वा त्रिगुणातीतः षडूर्मिरहितःषड्भाव-विकारशून्यः सत्यवाक्शुचिरद्रोही ग्राम एकरात्रं पत्तने पञ्चरात्रं क्षेत्रे पञ्चरात्रं तीर्थे पञ्चरात्रमनिकेतः स्थिरमतिर्नानृतवादी गिरिकन्दरेषु वसेदेक एव द्वौ वा चरेद् ग्रामं त्रिभिर्नगरं चतुर्भिर्ग्राममित्येकश्चरेत् । भिक्षुश्चतुर्दशकरणानां न तत्रावकाशं दद्यादविच्छिन्नज्ञानवैराग्यसंपत्तिमनुभूय मत्तो न कश्चिन्नान्यो व्यतिरिक्त इत्यात्मन्यालोच्य सर्वतः स्वरूपमेव पश्यञ्जीवन्मुक्तिमवाप्य प्रारब्धप्रतिभासनाशपर्यन्तं चतुर्विधं स्वरूपं ज्ञात्वा देहपतनपर्यन्तं स्वरूपानुसंधानेन वसेत् ।।

**यं यं वापि स्मरन्भावं त्यजत्यन्ते कलेवरम् ।**
**तं तमेव समाप्नोति नान्यथा श्रुतिशासनम् ।।**

तदेवं ज्ञात्वा स्वरूपानुसंधानं विनान्यथाचारपरो न भवेत्तदाचारवशा-त्तत्तल्लोकप्राप्तिर्ज्ञानवैराग्यसंपन्नस्य स्वस्मिन्नेव मुक्तिरिति न सर्वत्राचारप्रसक्तिस्तदाचारः। जाग्रत्स्वप्नसुषुप्तेष्वेकशरीरस्य जाग्रत्काले विश्वः स्वप्नकाले तैजसः सुषुप्तिकाले प्राज्ञः अवस्थाभेदादवस्थेश्वरभेदः कार्यभेदात्कारणभेदः तासु चतुर्दशकरणानां बाह्यवृत्तयोऽन्तर्वृत्तयस्तेषामुपादानकारणम् । वृत्तयश्चत्वारः मनोबुद्धिरहंकारश्चित्तं चेति । तत्तद्वृत्तिव्यापारभेदेन पृथगाचारभेदः । नेत्रस्थं जागरितं विद्यात्कण्ठे स्वप्नं समाविशत् । सुषुप्तं हृदयस्थं तु तुरीयं मूर्ध्नि संस्थितम् ।। तुरीयमक्षरमिति ज्ञात्वा जागरिते सुषुप्त्यवस्थापन्न इव यद्य च्छ्रुतं यद्यद्दृष्टं तत्तत्सर्वमविज्ञातमिव यो वसेत्तस्य स्वप्नावस्थायामपि तादृगवस्था भवति । स जीवन्मुक्त इति वदन्ति । सर्वश्रुत्यर्थप्रतिपादनमपि तस्यैव मुक्तिरिति ।

भिक्षुर्नैहिकामुष्मिकापेक्षः । यद्यपेक्षास्ति तदनुरूपो भवति। स्वरूपानु-संधानव्यतिरिक्तान्यशास्त्राभ्यासैरुष्ट्राकुङ्कुमभारवद्व्यर्थो न योगशास्त्रप्रवृत्तिर्न

सांख्यशास्त्राभ्यासो न मन्त्रतन्त्रव्यापारः । इतरशास्त्रप्रवृत्तिर्यतेरस्ति चेच्छवालंकारवच्चर्मकारवदतिविदूरकर्माचारविद्यादूरो न प्रणवकीर्तनपरो यद्यत्कर्म करोति तत्तत्फलमनुभवति एरण्डतैलफेनवदतः सर्वं परित्यज्य तत्प्रसक्तं मनोदण्डं करपात्रं दिगम्बरं दृष्ट्वा परिव्रजेद्भिक्षुः । बालोन्मत्तपिशाचवन्मरणं जीवितं वा न काङ्क्षेत कालमेव प्रतीक्षेत निर्देशभृतकन्यायेन परिव्राडिति ।। [ना० प० उ०५/१]

## तुर्यातीतानां भोजनादिकं अन्यदीयेच्छयैव

**अयाचितं यथालाभं भोजनाच्छादनं भवेत् ।**
**परेच्छया च दिग्वासाः स्नानं कुर्यात्परेच्छया ।।** [ना० प० उ० ५/४]

## परमहंसस्य पूगस्य सर्वोत्कृष्टता

तत्र परमहंसानां नाम संवर्तकारुणिश्वेतकेतुदुर्वासाऋभुनिदाघदत्तात्रेयशुक-वामदेवहारीतकप्रभृतयोऽव्यक्तलिङ्गाऽव्यक्ताचारा अनुन्मत्ता उन्मत्तवदाचरन्तः ।।

[याज्ञ० उ० ]

अथ योगिनां परमहंसानां कोऽयं मार्गस्तेषां का स्थितिरिति नारदो भगवन्तमुपगत्योवाच ।
तं भगवानाह --

## परमहंसपरिव्राजकानां मार्गः

योऽयं परमहंसमार्गो लोके दुर्लभतरो न तु बाहुल्यो यद्येको भवति स एव नित्यपूतस्थः स एव वेदपुरुष इति विदुषो मन्यन्ते महापुरुषो यच्चित्तं तत्सर्वदा मय्येवावतिष्ठते तस्मादहं च तस्मिन्नेवावस्थीये । असौ स्वपुत्रमित्र-कलत्रबन्ध्वादीञ्छिखायज्ञोपवीते स्वाध्यायं च सर्वकर्माणि संन्यस्यायं ब्रह्माण्डं च हित्वा कौपीनं दण्डमाच्छादनं च स्वशरीरोपभोगार्थाय च लोकस्योपकारार्थाय च परिग्रहेत् । तच्च न मुख्योऽस्ति कोऽयं मुख्य इति चेदयं मुख्यः ।

## परमहंसपरिव्राजकानां स्थितिः

न दण्डं न शिखां न यज्ञोपवीतं न चाच्छादनं चरति परमहंसो न शीतं न चोष्णं न सुखं न दुःखं न मानावमाने च षडूर्मिवर्जं निन्दागर्वमत्सरदम्भदर्पेच्छाद्वेषसुखदुःखकामक्रोधलोभमोहहर्षासूयाहंकारादींश्च हित्वा स्ववपुः कुणपमिव दृश्यते यतस्तद्वपुरपध्वस्तं संशयविपरीतमिथ्याज्ञानानां यो

हेतुस्तेन नित्यनिवृत्तस्तन्नित्यबोधस्तत्स्वयमेवावस्थितिस्तं शान्तमचलमद्वयानन्दविज्ञानघन एवास्मि । तदेव मम परमधाम तदेव शिखा च तदेवोपवीतं च । स परमहंस आशाम्बरो न नमस्कारो न स्वधाकारो न निन्दा न स्तुतिर्यादृच्छिको भवेद्भिक्षुः। नावाहनं न विसर्जनं न मंत्रं न ध्यानं नोपासनं च न लक्ष्यं नालक्ष्यं न पृथङ् नापृथगहं न त्वं न सर्वं चानिकेतस्थितिरेव ।। [परम० उ० ]

"परमहंसा न दण्डधरा मुण्डाः कन्थाकौपीनवाससोऽव्यक्तलिङ्गा अव्यक्ताचारा अनुन्मत्ता उन्मत्तवदाचरन्तस्त्रिदण्डकमण्डलुशिक्यपक्षजलपवित्रपात्रपादुकासनशिखायज्ञोपवीतानां त्यागिनः शून्यागारदेवगृहवासिनो न तेषां धर्मो नाधर्मो न चानृतं सर्वसहाः सर्वसमाः समलोष्टाश्मकाञ्चना यथोपपन्नं चातुर्वर्ण्यं भैक्षाचर्यं चरन्त आत्मानं मोक्षयन्त आत्मानं मोक्षयन्त इति ।।" [आश्र० उ०]

"अथ जातरूपधरा निर्द्वन्द्वा निष्परिग्रहाः शुक्लध्यानपरायणा आत्मनिष्ठाः प्राणसंधारणार्थं यथोक्तकाले भैक्षमाचरन्तः शून्यागारदेवगृहतृणकूटवल्मीकवृक्षमूलकुलालशालाग्निहोत्रशालानदीपुलिनगिरिकन्दरकुहरकोटरनिर्झरस्थण्डिलेषु तत्र ब्रह्ममार्गे सम्यक्सम्पन्नाः शुद्धमानसाः परमहंसाचरणेन संन्यासेन देहत्यागं कुर्वन्ति ते परमहंसा नामेति ।।" [भि० उ०]

"यथा जातरूपधरो निर्द्वन्द्वो निष्परिग्रहस्तत्त्वब्रह्ममार्गे सम्यक्सम्पन्नः शुद्धमानसः प्राणसंधारणार्थं यथोक्तकाले विमुक्तो भैक्षमाचरन्नुदरपात्रेण लाभालाभौ समौ भूत्वा शून्यागारदेवगृहतृणकूटवल्मीकवृक्षमूलकुलालशालाग्निहोत्रशाला नदीपुलिनगिरिकुहरकन्दरकोटरनिर्झरस्थण्डिलेष्वनिकेतवास्यप्रयत्नो निर्भयः शुक्लध्यानपरायणोऽध्यात्मनिष्ठोऽशुभकर्मनिर्मूलनपरः संन्यासेन देहत्यागं करोति स परमहंसो नाम ।। [जा० उ० ]

अथ खलु सोम्यैते परिव्राजका यथा प्रादुर्भवन्ति तथा भवन्ति । कामक्रोधलोभमोहदम्भदर्पासूयाममत्वाहंकारादींस्तितीर्य मानावमानौ निन्दास्तुती च वर्जयित्वा वृक्ष इव तिष्ठासेत् । छिद्यमानो न ब्रूयात् । तदैवं विद्वांसः इहैवामृता भवन्ति । तदेतदृचाभ्युक्तम् --

बन्धुपुत्रमनुमोदयित्वानवेक्ष्यमाणो द्वन्द्वसहः प्रशान्तः । प्राचीमुदीचीं वा निर्वर्तयंश्चरेत् ।। [शाट्या० उ०]

"वेदान्तश्रवणपूर्वकं प्रणवानुष्ठानं कुर्वन्ब्रह्ममार्गे सम्यक्संपन्नः

स्वाभिमतमात्मनि गोपायित्वा निर्ममोऽध्यात्मनिष्ठः कामक्रोधलोभमोहमदमात्सर्यदम्भदर्पाहंकारासूयागर्वेच्छाद्वेषहर्षामर्षममत्वादींश्च हित्वा ज्ञानवैराग्ययुक्तो वित्तस्त्रीपराङ्मुखः शुद्धमानसः सर्वोपनिषदर्थमालोच्य ब्रह्मचर्यापरिग्रहाहिंसासत्यं यत्नेन रक्षञ्जितेन्द्रियो बहिरन्तःस्नेहवर्जितः शरीरसंधारणार्थपरः त्रिषु [(चतुर्षु ) पा०] वर्णेष्वभिशस्तपतितवर्जितेषु पशुरद्रोही भैक्षमाणो ब्रह्मभूयाय भवति ।। सर्वेषु कालेषु लाभालाभौ समौ कृत्वा करपात्रमाधूकरेणान्नमश्नन्मेदोवृद्धिमकुर्वन्कृशीभूत्वा ब्रह्माहमस्मीति भावयन्गुर्वर्थं ग्राममुपेत्य ध्रुवशीलोऽष्टौ मास्येकाकी चरेद्द्वावेव वाचरेत् । यदालंबुद्धिर्भवेत्तदा कुटीचको वा बहूदको वा हंसो वा परमहंसो वा तत्तन्मन्त्रपूर्वकं कटिसूत्रं कौपीनं दण्डं कमण्डलुं सर्वमप्सु विसृज्याथ जातरूपधरश्चरेत् ग्राम एकरात्रं तीर्थे त्रिरात्रं पत्तने पञ्चरात्रं क्षेत्रे सप्तरात्रमनिकेतः स्थिरमतिरनग्निसेवी निर्विकारो नियमानियममुत्सृज्य प्राणसंधारणार्थमयमेव लाभालाभौ समौ कृत्वा गोवृत्त्या भैक्षमाचरन्नुदकस्थलकमण्डलुरबाधकरहस्यस्थलवासो न पुनर्लाभालाभरतः शुभाशुभकर्मनिर्मूलनपरः सर्वत्र भूतलशयनः क्षौरकर्मपरित्यक्तो युक्तचातुर्मास्यव्रतनियमः । शुक्लध्यानपरायणोऽर्थस्त्रीपुत्रपराङ्मुखोऽनुन्मत्तोऽप्युन्मत्तवदाचरन्नव्यक्तलिङ्गोऽव्यक्तकाचारो दिवानक्तसमत्वेनास्वप्नः स्वरूपानुसंधानब्रह्मप्रणवध्यानमार्गेणावहितः संन्यासेन देहत्यागं करोति सः परमहंसपरिव्राजको भवति ।।'' [प०प०उ०]

परिबोधात्परिच्छेदात्परिपूर्णावलोकनात् ।<br>
परिपूर्णफलत्वाच्च परिव्राजक उच्यते ।।<br>
परं वा व्रजते नित्यं परं वोत्सृजते पुनः ।<br>
हित्वा चैव परं जन्म परिव्राजक उच्यते ।।<br>
ब्रह्मनिष्ठो भवेन्नित्यं यः परिव्राडतन्द्रितः ।<br>
स ब्रह्म परमं ह्येति न चेहाऽऽजायते पुनः ।।

*

# परमहंसस्य अवधूताश्रमस्य वाऽपरिग्रहः

तदेतद्विज्ञाय ब्राह्मणः परिव्रज्य परिव्राडेकशाटी मुण्डोऽपरिग्रहः शरीरक्लेशासहिष्णुश्चेदथवा यथाविधिश्चेज्जातरूपधरो भूत्वा सपुत्रमित्रकलत्राप्तबन्ध्वादीनि स्वाध्यायं सर्वकर्माणि संन्यस्यायं ब्रह्माण्डं च सर्वं कौपीनं दण्डमाच्छादनं च त्यक्त्वा द्वन्द्वसहिष्णुर्न शीतं न चोष्णं न सुखं न दुःखं न निद्रा न मानावमाने च षडूर्मिवर्जितो निन्दाहंकारमत्सरगर्वदम्भेर्ष्या-सूयेच्छाद्वेषसुखदुःखकामक्रोधलोभमोहादीन् विसृज्य स्ववपुः शवाकारमिव स्मृत्वा स्वव्यतिरिक्तं सर्वमन्तर्बहिरमन्यमानः कस्यापि वन्दनमकृत्वा न नमस्कारो न स्वाहाकारो न स्वधाकारो न निन्दास्तुतिर्यादृच्छिको भवेद्यदृच्छालाभसन्तुष्टः सुवर्णादीन्न परिग्रहेन्नावाहनं न विसर्जनं न मन्त्रं नामन्त्रं ध्यानं नोपासनं न लक्ष्यं नालक्ष्यं न पृथक् नापृथक् न त्वन्यत्र न सर्वत्रानिकेतस्थिरमतिः शून्यागारवृक्षमूलदेवगृहतृणकूटकुलालशालाग्निहोत्रशालाग्निदिगन्तरनदीपुलिन-भूगृहकन्दरनिर्झरस्थण्डिलेषु वने वा श्वेतकेतुऋभुनिदाघऋषभदुर्वासःसंवर्तकदत्तात्रेय रैवतकवदव्यक्तलिङ्गोऽव्यक्ताचारो बालोन्मत्तपिशाचवदनुन्मत्तोन्मत्तवदाचरंस्त्रिदण्डं शिक्यपात्रं कमण्डलुं कटिसूत्रं कौपीनं च तत्सर्वं भूः स्वाहेत्यप्सु परित्यज्य कटिसूत्रं च कौपीनं दण्डं वस्त्रं कमण्डलुं सर्वमप्सु विसृज्याथ जातरूपधरश्चरेदा-त्मानमन्विच्छेद्यथा जातरूपधरो निर्द्वन्द्वो निष्परिग्रहस्तत्त्वब्रह्ममार्गे सम्यक्सम्पन्नः शुद्धमानसः प्राणसंधारणार्थं यथोक्तकाले करपात्रेणान्येन वा याचिताहारमाहरन् लाभालाभे समो भूत्वा निर्ममः शुक्लध्यानपरायणोऽध्यात्मनिष्ठः शुभाशुभ-कर्मनिर्मूलनपरः संन्यस्य पूर्णानन्दैकबोधस्तद्ब्रह्माहमस्मीति ब्रह्मप्रणवमनुस्म-रन्भ्रमरकीटन्यायेन शरीरत्रयमुत्सृज्य संन्यासेनैव देहत्यागं करोति स कृतकृत्यो भवति ।।

[ना० प० उ० ३/८६]

*

# तुरीयातीतावधूतचर्या निष्ठा च

अथ तुरीयातीतावधूतानां कोऽयं मार्गस्तेषां का स्थितिरिति पितामहो भगवन्तं पितरमादिंनारायणं परिसमेत्योवाच ।

तमाह भगवान्नारायणो योऽयमवधूतमार्गस्थो लोके दुर्लभतरो न तु बाहुल्यो यद्येको भवति स एव नित्यपूतः स एव वैराग्यमूर्तिः स एव ज्ञानाकारः स एव वेदपुरुष इति ज्ञानिनो मन्यन्ते । महापुरुषो यस्तच्चित्तं मय्येवावतिष्ठते । अहं च तस्मिन्नेवावस्थितः सोऽयमादौ तावत्क्रमेण कुटीचको बहूदकत्वं प्राप्य बहूदको हंसत्वमवलम्ब्य हंसः परमहंसो भूत्वा स्वरूपानुसंधानेन सर्वप्रपञ्चं विदित्वा दण्डकमण्डलुकटिसूत्रकौपीनाच्छादनं स्वविध्युक्तक्रियादिकं सर्वमप्सु संन्यस्य दिगम्बरो भूत्वा विवर्णजीर्णवल्कलाजिनपरिग्रहमपि संत्यज्य तदूर्ध्वममन्त्रवदाचरन्क्षौराभ्यङ्गस्नानोर्ध्वपुण्ड्रादिकं विहाय लौकिकवैदिकमप्युपसंहृत्य सर्वत्र पुण्यापुण्यवर्जितो ज्ञानाज्ञानमपि विहाय शीतोष्ण-सुखदुःखमानावमानं निर्जित्य वासनात्रयपूर्वकं निन्दाऽनिन्दागर्वमत्सरदम्भदर्पद्वेषकामक्रोधलोभमोहहर्षामर्षासूयात्मसंरक्षणादिकं दग्ध्वा स्ववपुः कुणपाकारमिव पश्यन्नयत्नेनानियमेन लाभालाभौ समौ कृत्वा गोवृत्त्या प्राणसंधारणं कुर्वन्यत्प्राप्तं तेनैव निर्लोलुपः सर्वविद्यापाण्डित्यप्रपञ्चं भस्मीकृत्य स्वरूपं गोपयित्वा ज्येष्ठाऽज्येष्ठत्वानपलापकः सर्वोत्कृष्टत्वसर्वात्मकत्वाद्वैतं कल्पयित्वा मत्तो व्यतिरिक्तः कश्चिन्नान्योऽस्तीति देवगुह्यादिधनमात्मन्युपसंहृत्य दुःखेन नोद्विग्नः न सुखेन नानुमोदको रागे निःस्पृहः सर्वत्र शुभाशुभयोरभिस्नेहः सर्वेन्द्रियोपरमः स्वपूर्वापन्नाश्रमाचारविद्याधर्मप्रभावमननुस्मरंस्त्यक्तवर्णाश्रमाचारः सर्वदा दिवानक्तसमत्वेनास्वपनः सर्वदा संचारशीलो देहमात्रावशिष्टो जलस्थलकमण्डलुः सर्वदाऽनुन्मत्तो बालोन्मत्तपिशाचवदेकाकी संचरन्नसंभाषणपरः स्वरूपध्यानेन निरालम्बमवलम्ब्य स्वात्मनिष्ठानुकूलेन सर्वं विस्मृत्य तुरीयातीतावधूतवेषेणाद्वैतनिष्ठापरः प्रणवात्मकत्वेन देहत्यागं करोति यः स कृतकृत्यो भवति ॥

[तुरी० उ०]

*

## अवधूतशब्दस्याक्षरार्थः

अक्षरत्वाद्वरेण्यत्वाद्धूतसंसारबन्धनात् ।
तत्त्वमस्यादिलक्ष्यत्वादवधूत इतीर्यते ।। [अव० उ० १]
अवधूतलक्षणं वर्णैर्ज्ञातव्यं भगवत्तमैः ।
वेदवर्णार्थतत्वज्ञैर्वेदवेदान्तवादिभिः ।।२।।
आशापाशविनिर्मुक्तः आदिमध्यान्तनिर्मलः ।
आनन्दे वर्तते नित्यमकारं तस्य लक्षणम् ।।३।।
वासना वर्जिता येन वक्तव्यं च निरामयम् ।
वर्तमानेषु वर्तेत वकारं तस्य लक्षणम् ।।४।।
धूलिधूसरगात्राणि धूतचित्तो निरामयः ।
धारणाध्याननिर्मुक्तो धूकारस्तस्य लक्षणम् ।।५।।
तत्त्वचिन्ता धृता येन चिन्ताचेष्टाविवर्जितः ।
तमोऽहंकारनिर्मुक्तस्तकारस्तस्य लक्षणम् ।।६।।

[अव० मी०

## गौण-अवधूतचर्या

यो विलङ्घ्याश्रमान्वर्णानात्मन्येव स्थितः सदा ।
अतिवर्णाश्रमी योगी अवधूतः स कथ्यते ।। [अव० उ०२]

## अवधूतचर्यानुक्रमणं महाव्रतञ्च

स्वैरं स्वैरविहरणं तत्संसरणम् । साम्बरा वा दिगम्बरा वा । न तेषां धर्माधर्मौ न मेध्यामेध्यौ । सदा सांग्रहण्येष्ट्याश्वमेधमन्तर्यागं यजते । स महामखो महायोगः ।।

कृत्स्नमेतच्चित्रं कर्म । स्वैरं न विगायेत्तन्महाव्रतम् । न स मूढवल्लिप्यते ।।

यथा रविः सर्वरसान्प्रभुङ्क्ते
हुताशनश्चापि हि सर्वभक्षः ।
तथैव योगी विषयान्प्रभुङ्क्ते
न लिप्यते पुण्यपापैश्च शुद्धः ।।

आपूर्यमाणमचलप्रतिष्ठं
समुद्रमापः प्रविशन्ति यद्वत् ।
तद्वत्कामा यं प्रविशन्ति सर्वे
स शान्तिमाप्नोति न कामकामी ।।[अव० उ० ६-७]

## मुख्यावधूतलक्षणं तच्चर्या तत्फलञ्च

परमहंसः सोऽहम् । परिव्राजकाः पश्चिमलिङ्गाः । मन्मथक्षेत्रपालाः । गगनसिद्धान्तः अमृतकल्लोलनदी । अक्षयं निरञ्जनम् । निःसंशयऋषिः । निर्वाणो देवता । निष्कुलप्रवृत्तिः । निष्केवलज्ञानम् । ऊर्ध्वाम्नायः । निरालम्बपीठः। संयोगदीक्षा । वियोगोपदेशः । दीक्षासंतोषपानं च । द्वादशादित्यावलोकनम् । विवेकरक्षा । करुणैव केलिः । आनन्दमाला । एकान्तगुहायां मुक्तासनसुखगोष्ठी। अकल्पितभिक्षाशी । हंसाचारः । सर्वभूतान्तर्वर्ती हंस इति प्रतिपादनम् । धैर्यकन्था । उदासीनकौपीनम् । विचारदण्डः । ब्रह्मावलोकयोगपट्टः । श्रियां पादुका । परेच्छाचरणम् । कुण्डलिनीबन्धः । परापवादमुक्तो जीवन्मुक्तः । शिवयोगनिद्रा च । खेचरी मुद्रा च । परमानन्दी । निर्गतगुणत्रयम् । विवेकलभ्यम् । मनोवागगोचरम् । अनित्यं जगद्यज्जनितं स्वप्नजगदभ्रगजादितुल्यम् । तथा देहादिसंघातं मोहगुणजालकलितं तद्रज्जुसर्पवत्कल्पितम् । विष्णुविध्यादिशताभिधानलक्ष्यम् । अङ्कुशो मार्गः । शून्यं न । संकेतः परमेश्वरसत्ता । सत्यसिद्धयोगो मठः । अमरपदं तत्स्वरूपम् । आदिब्रह्मस्वसंवित् । अजपा गायत्री । विकारदण्डो ध्येयः । मनोनिरोधिनी कन्था । योगेन सदानन्दस्वरूपदर्शनम् । आनन्दभिक्षाशी । महाश्मशानेऽप्यानन्दवने वासः । एकान्तस्थानम् । आनन्दमठम् । उन्मन्यवस्था । शारदा चेष्टा उन्मनी गतिः । निर्मलगात्रम् । निरालम्बपीठम् । अमृतकल्लोलानन्दक्रिया । पाण्डुरगगनम् । महासिद्धान्तः । शमदमादिदिव्यशक्त्याचरणे क्षेत्रपात्रपटुता । परावरसंयोगः । तारकोपदेशः । अद्वैतसदानन्दो देवता । नियमः स्वान्तरिन्द्रियनिग्रहः। भयमोहशोकक्रोधत्यागस्त्यागः । परावरैक्यरसास्वादनम् । अनियामकत्वनिर्मलशक्तिःस्वप्रकाश ब्रह्मतत्त्वे शिवशक्तिसंपुटितप्रपञ्चच्छेदनम् । तथा पत्राक्षाक्षिकमण्डलुः । भावाभावदहनम् । बिभ्रत्याकाशाधारम् । शिवं

तुरीयं यज्ञोपवीतम् । तन्मया शिखा । चिन्मयं चोत्सृष्टिदण्डम् । संतताक्षिकमण्डलुम् । कर्मनिर्मूलनं कन्था । मायाममताहंकारदहनम् । श्मशाने अनाहताङ्गी निस्त्रैगुण्यस्वरूपानुसन्धानं समयम् । भ्रान्तिंहरणम् । कामादिवृत्तिदहनम् । काठिन्यदृढकौपीनम् । चीराजिनवासः । अनाहतमन्त्रः । अक्रिययैव जुष्टम् । स्वेच्छाचारस्वस्वभावो मोक्षः परब्रह्म । प्लववदाचरणम् । ब्रह्मचर्यशान्तिसंग्रहणम् । ब्रह्मचर्याश्रमेऽधीत्य वानप्रस्थाश्रमेऽधीत्य सर्वसंविन्न्यासं संन्यासम् । अन्ते ब्रह्माखण्डाकारम् । नित्यं सर्वसंदेहनाशनम् ।। [नि० उ०]

## संन्यासिनः परमेश्वरत्वम्

आशाम्बरो न नमस्कारो न दारपुत्राभिलाषी लक्ष्यालक्ष्यनिवर्तकः परिव्राट् परमेश्वरो भवति ।।१।। [याज्ञ० उ०]

यतिः परमहंसस्तु तुर्याख्यः श्रुतिशासनात् ।
शान्तो दान्तः सर्वसमः प्रणवाभ्यासतत्परः ।।
श्रवणादिरहितः शुद्धो निदिध्यासनतत्परः ।
ब्रह्मभावेन संपूर्य ब्रह्माण्डमखिलं स्थितः ।।
आत्मतृप्तश्चात्मरतिः समलोष्टाश्मकाञ्चनः ।
तत्त्वं पदैक्यबोधाच्च विष्णुरूपः स्वयं सदा ।।२।। [अत्रि०]

अरण्यनिष्ठस्य जितेन्द्रियस्य सर्वेन्द्रियप्रीतिनिवर्तकस्य ।
अध्यात्मचिन्तागतमानसस्य ध्रुवाह्यनावृत्तिरुपेक्षकस्य ।।३।।
निवसेत्परमो हंसो यत्र क्वापि कथंचन ।
निर्द्वन्द्वो नित्यसत्त्वस्थः सर्वत्र समदर्शनः ।
तुरीयः परमो हंसः सर्वत्र समदर्शनः ।
तुरीयः परमो हंसः साक्षान्नारायणो यतिः ।।४।।
योगाभ्यासरतः शान्तो निर्धूताशेषकल्मषः ।
ब्रह्मविद् ब्रह्म भवति परिव्राडेव नेतरः ।।५।।
लक्ष्यालक्ष्यमतिं त्यक्त्वा यस्तिष्ठेत्केवलात्मना ।
शिव एव स्वयं साक्षादयं ब्रह्मविदुत्तमः ।
जीवन्नेव सदा मुक्तः कृतार्थो ब्रह्मवित्तमः ।।६।। [आलो० १९-२०]
उपाधिनाशाद्ब्रह्मवसन्ब्रह्मण्यप्येति निर्द्वयम् ।
शैलूषो वेषसद्भावाभावयोश्च यथा पुमान् ।।

**तथैव ब्रह्मविच्छ्रेष्ठः सदा ब्रह्मैव नापरः ।।** [आत्म० २१-२११/२]

स्वरूपज्ञः परिव्राट् । परिव्राडेकाकी चरति । भयत्रस्तसारङ्गवत्तिष्ठति । गमनविरोधं न करोति । स्वशरीरव्यतिरिक्तं सर्वं त्यक्त्वा षट्पदवृत्त्या स्थित्वा स्वरूपानुसंधानं कुर्वन्सर्वमनन्यबुद्ध्या स्वस्मिन्नेव मुक्तो भवति । स परिव्राट् सर्वक्रियाकारकनिवर्तको गुरुशिष्यशास्त्रादिविनिर्मुक्तः । सर्वसंसारं विसृज्य चामोहितः परिव्राड् कथं निर्धनिकः सुखी धनवाञ्ज्ञानाज्ञानोभयातीतः सुखदुःखातीतः स्वयंज्योतिः प्रकाशः सर्ववेद्यः सर्वज्ञः सर्वसिद्धिदः सर्वेश्वरः सोऽहमिति ।।

[ना०प० उ० ९/२०]

## यतिसेवाप्रशंसा

गृहस्थादिभिर्यतिः पूज्यः । उक्तं च भगवता –

**एकदण्डी त्रिदण्डी वा शिखी मुण्डी तथैव च ।**
**काषायमात्रधारोऽपि यतिः पूज्यो युधिष्ठिर ।।१।।** [महा०]
**सर्वेषामाश्रमाणां तु संन्यासी ह्युत्तमाश्रमी ।**
**स एवात्र नमस्यः स्याद्भक्तसन्मार्गवर्तिभिः ।।२।।**
**ब्रह्मिष्ठः परमो हंसः साक्षान्नारायणः स्मृतः ।**
**यस्तं संपूजयेन्नित्यं विष्णुस्तेन प्रपूजितः ।।३।।**
**अष्टाक्षरेण मन्त्रेण यतयस्तु नमस्कृताः ।**
**स्मृतनारायणा घ्नन्ति प्राणिनां पापपञ्जरम् ।।४।।**
**अष्टाक्षरेण मन्त्रेण नमो नारायणात्मना ।**
**नमस्यो भक्तिभावेन विष्णुरूपी यतिर्यतः ।।५।।**
**यत्र कुत्रापि यतिनं दृष्ट्वा यो दण्डवद्भुवि ।**
**न नमेदिति कायेन कल्पान्ते रौरवादयः ।।६।।** [हारीत०]
**ये नरास्त्यक्तसर्वस्वा मुण्डाः काषायवाससः ।**
**विचरन्ति महीं कृत्स्नां ते मम प्रियसत्तमाः ।।७।।**
**तस्मात्तेष्वेव शुश्रूषाः कुर्याद्भागवतः सदा ।**
**तेषामपि कृता पूजा देवस्यैव कृता भवेत् ।।८।।**
**भैक्षचर्याशय्यादीनि दत्त्वा तेषां तु भक्तितः ।**
**विद्वान् दत्तोपदेशश्च विष्णोः प्रियतमो भवेत् ।।९।।**

[प० सं० २५/३३-३५]

शिववाक्यम् :–

ब्रह्मा विष्णुश्च रुद्रश्च ससाध्या मरुतस्तथा ।
सकृद्भुक्तेन यतिना पितृदेवाः सवासवाः ।।१०।।
सर्वे ते तृप्तिमायान्ति दशवर्षाणि पञ्च च ।
जन्मकोटिसहस्रेषु पूजितस्तेन शंकरः ।।११।।
गृहे यस्य समायाति महाभागवतो यतिः ।
यतिभिः पूज्यमानैस्तु सर्वे देवाः सुपूजिताः ।।१२।।
अपमाने कृते तेषां देवाः सर्वेऽपमानिताः ।
यो वै यतीननादृत्य भोजयेदितरान्द्विजान् ।।१३।।
विजानन्वसते ग्रामे कव्यं तद्याति राक्षसान् ।
अलाभे ध्यानभिक्षूणां भोजयेद्ब्रह्मचारिणम् ।।१४।।
तदलाभेऽप्युदासीनं गृहस्थमपि भोजयेत् ।
सदोषं निर्गुणं वाऽपि यतिं पुत्र न कीर्तयेत् ।।१५।।
अज्ञानात्कीर्तयेद्यस्तु स याति नरकं ध्रुवम् ।
येनापमानितो भिक्षुस्तेनाहं चापमानितः ।।१६।।
हरिर्ब्रह्मादयो देवाः पितरो मुनयस्तथा ।
आगच्छन्ति सुराः सर्वे ऋषयो मुनिपुंगवाः ।।१७।।
तीर्थानि क्रतवः सर्वे भिक्षुके गृहमागते ।
यतिर्यस्य गृहस्थस्य संतुष्टो वसते गृहे ।।१८।।
तुष्टो भवति दैत्यारिर्यावदाभूतसंप्लवम् ।
ये नमन्ति यतिं दूराद् दृष्ट्वा काषायवाससम् ।।१९।।
राजसूयफलावाप्तिस्तेषां भवति पुत्रक ।
यतिरूपेण सर्वत्र विष्णुः पर्यटते महीम् ।।२०।।
भक्तानामनुकम्पार्थं महर्द्धीनां विवृद्धये ।
यदा कारयति स्नानं यतीनां यो द्विजोत्तमः ।।२१।।
स्नानजं लभते पुण्यं गङ्गायाः शतवार्षिकम् ।
कौपीनाच्छादनं दण्डं बहिर्वासश्च पादुके ।।२२।।
यो ददाति यथाशक्त्या पुण्यं तस्य वदाम्यहम् ।
दत्तं वाजिसहस्रं तु मातङ्गानां शतत्रयम् ।।२३।।
गोऽयुतस्य सहस्रस्य फलं प्राप्नोति मानवः ।

कौपीनाच्छादनं पात्रं भिक्षुकेभ्यः प्रयच्छति ।।२४।।
वाजपेयसमं पुण्यं विष्णुमुद्दिश्य यत्कृतम् ।
ध्यानभिक्षुमतिक्रम्य यद्यन्यं भोजयेद्गृही ।।२५।।
न तत्फलमवाप्नोति सर्वं गोत्रं प्रतापयेत् ।
मुण्डं यतेन्द्रियं शान्तं ध्यानभिक्षुमकिल्विषम् ।।२६।।
तं नित्यं भोजयेच्छ्राद्धे दैवे पित्र्ये च कर्मणि ।
अग्निचित्कपिला सत्री राजा भिक्षुर्महोदधिः ।।२७।।
दृष्टमात्राः पुनन्त्येते तस्मात्पश्येत नित्यशः ।
पक्वान्नस्वामिको भिक्षुर्यदि तस्मै न दीयते ।।२८।।
चान्द्रायणेन शुद्धिः स्यादिति च स्मृतिशासनम् ।
यतिश्च ब्रह्मचारी च पक्वान्नस्वामिनावुभौ ।
तयोरन्नमदत्त्वा तु भुक्त्वा चान्द्रायणं चरेत् ।।२९।।
लक्षलक्षाणि यो दद्याद्ब्राह्मणे वेदपारगे ।
तथा तत्त्वविदे भिक्षां तयोस्तुल्यं फलं भवेत् ।।३०।।
संन्यासदिवसे यस्य यतिर्भैक्षं समाचरेत् ।
पुत्रं स लभते श्रेष्ठं सफलं तस्य जीवितम् ।।३१।।
द्वितीयदिवसेऽप्येवं तृतीयेऽप्येवमेव हि ।
अतस्त्रिदिनमध्ये तु यतिर्भोज्यः प्रयत्नतः ।।३२ ।।

[स्क० पु०]

चतुर्विधो भिक्षुकः स्यात्कुटीचकबहूदकौ ।
हंसः परमहंसश्च यो यः पश्चात्स उत्तमः ।।३३।।
ब्रह्मचारिसहस्रं च वानप्रस्थशतानि च ।
ब्राह्मणानां हि कोटिस्तु यतिरेको विशिष्यते ।।३४।। [अत्रि]
साक्षाद्विष्ण्वाकृतिर्विप्रो नमस्योऽयं सुरासुरैः ।
वर्णाश्रमैः समस्तैश्च परहंसो द्विजोत्तमः ।।३५।।
द्वे रूपे वासुदेवस्य चलं चाचलमेव च ।
चलं संन्यासिनां रूपमचलं प्रतिमादिकम् ।।३६।।
देवताप्रतिमां दृष्ट्वा यतिं दृष्ट्वैकदण्डिनम् ।
नमस्कारमकुर्वाणो नरकं रौरवं व्रजेत् ।।३७।।

विष्णुलिङ्गश्रितं विप्रं दृष्ट्वा चैव नराधमाः ।
स्थिताः शय्यासने याने न त्यजन्ति विमोहिताः ।।३८।।
अभ्युत्थानं नमस्कारः प्रसन्नवदनादिकम् ।
कर्मणा मनसा वाचा ये न कुर्वन्ति सत्क्रियाम् ।
सदाचारपरिभ्रष्टास्ते पापा यान्त्यधोगतिम् ।।३९।।
आसनं शयनं यानं यतिं दृष्ट्वा न यस्त्यजेत् ।
स मृतोऽपि हि दुष्टात्मा श्वयोनावेव जायते ।।४०।।
दुर्वृत्ते वा सुवृत्ते वा यतौ निन्दां न कारयेत् ।
यतीन्वै दूषमाणस्तु नरकं याति दारुणम् ।।४१।।
यतिहस्तगतं द्रव्यं गृह्णीयाज्ज्ञानतो यदि ।
अधः स नयते मूढः कुलानामेकविंशति ।।४२।। [जावाल०]
उपचर्यः सदा भिक्षुराश्रमस्थो विचक्षणैः ।
व्रतलोपो यथा चास्य न भवेद्वै यथा तथा ।।४३।।
शुष्कमन्नं पृथक्पाकं यो यतिभ्यः प्रयच्छति ।
स मूढो नरकं याति तेन पापेन कर्मणा ।।४४।।
यतिभ्यः श्रद्धया दद्याद्भिक्षां पात्रप्रपूरणीम् ।
न क्षीयते च तत्तस्य कल्पकोटिशतैरपि ।।४५।।
भिक्षाकाले यतिर्यस्य गृहं प्राप्तो यदा भवेत् ।
देयाः सर्वे रसास्तस्मा आत्मनः शुभमिच्छता ।।४६।।
पूरयित्वा हविष्येण यतये यः प्रयच्छति ।
पितृन्स उद्धरेत्पूर्वानपि ये नरकाश्रिताः ।।४७।।
यावन्ति यतिपात्राणि यावच्चान्नं प्रयच्छति ।
तावद्वर्षसहस्राणि स्वर्गलोके महीयते ।।४८।। [वृद्धयाज्ञ०]
संन्यासिनश्च स्पर्शेन निष्पापो जायते नरः ।
संन्यासिनं भोजयित्वा चाश्वमेधफलं भवेत् ।।४९।।

[ब्र० वै०पु० ४/८३/८६]

आश्रमे तु यतिर्यस्य मुहूर्तमपि विश्रमेत् ।
किं तस्यानेकतन्त्रेण कृतकृत्यः स जायते ।।५०।।

सञ्चितं यद्गृहस्थेन पापमामरणान्तिकम् ।
निर्धक्ष्यति हि तत्सर्वमेकरात्रोषितो यतिः ।।५१।।

[स्क० पु० का० ख० ४१/३०-३१]

एकरात्रं तु निवसेद्भिक्षुर्यस्य गृहाङ्गणे ।
तस्य वै तारयेत्पूर्वान् विंशतिं पितृमातृतः ।।
भिक्षुर्यस्यान्नभुक् ब्रह्मयोगाभ्यासरतो भवेत् ।
परिणामश्च योगेन कृतकृत्यो गृही भवेत् ।।५३।।

[वृहत्पारा० १२/१४०-१४११/२]

न क्रियां गोत्रमाचारं शौचाशौचं शुभाशुभम् ।
पृच्छेन्माधूकरायाते कुलं शीलं व्रतं यतेः ।।५४।।
आश्रमेषु यतिर्यस्य मुहूर्तमपि विश्रमेत् ।
किं तस्यान्येन धर्मेण कृतकृत्यो हि स स्मृतः ।।५५।।
जन्मप्रभृति यत्पापं गृहस्थेन तु संचितम् ।
तत्सर्वं नाशयत्याशु एकरात्रोषितो यतिः ।।५६।।
यतिर्योगी ब्रह्मचारी शतायुः सत्यवाक्सती ।
सत्री वदान्यः शूरश्च स्मृताः शुद्धाश्च ते सदा ।।५७।। [क्रतु०]
व्याधितानां तु भिक्षूणां कुर्यादाराममण्डपम् ।
पथ्याद्या परिचर्या च भेषजैर्य उपाचरेत् ।।५८।।
किं तस्यान्येन धर्मेण स्वर्गे सोऽमृतपो भवेत् ।
यतिप्राप्यं प्राप्य लोकं सोऽनन्तसुखमश्नुते ।।५९।।
अदुष्टापतितं विप्रं यतिर्यः परिवर्जयेत् ।
स तस्य सुकृतं दत्त्वा दुष्कृतं प्रतिपद्यते ।।६०।।
तथैव च गृहस्थस्य निराशो भिक्षुको व्रजेत् ।
इष्टं दत्तं तपोऽधीतं सर्वमादाय गच्छति ।।६१।।
संचितं यद्गृहस्थस्य पापमामरणान्तिकम् ।
निर्दहिष्यति तत्सर्वमेकरात्रोषितो यतिः ।।६२।।
यतिर्यस्य गृहे भुङ्क्ते तस्य भुङ्क्ते स्वयं हरिः ।
हरिर्यस्य गृहे भुङ्क्ते तस्य भुङ्क्ते जगत्त्रयम् ।।६३।।
बटौ तु समदत्तं स्याद्गृहस्थे द्विगुणं स्मृतम् ।
वानप्रस्थे शतगुणं यतौ दत्तमनन्तकम् ।।६४।।

कुर्यादावसथं यस्तु दद्याद्वा यतयेऽण्वपि ।
ज्ञानिने तु विशेषेण स याति ब्रह्मणः पदम् ।।६५।।
यतिहस्ते जलं दद्याद्भिक्षां दद्यात्पुनर्जलम् ।
तद्भैक्षं मेरुणा तुल्यं तज्जलं सागरोपमम् ।।६६।।
चातुर्मास्यं यतीनां तु यः कारयति धर्मवित् ।
स यात्यैहिकमैश्वर्यमामुष्मिकसुखं महत् ।।६७।। [क्रतु०]
आश्रमे तु यतिर्यस्य मुहूर्तमपि विश्रमेत् ।
किं तस्यान्येन धर्मेण कृतकृत्योऽभिजायते ।।६८।।
संचितं यद्गृहस्थेन पापमामरणान्तिकम् ।
निर्दहत्येव तत्सर्वमेकरात्रोषितो यतिः ।।६९।।
अध्वश्रमपरिश्रान्तं यस्तु भोजयते यतिम् ।
निखिलं भोजितं तेन त्रैलोक्यं सचराचरम् ।।७०।।
यस्मिन्देशे वसेद्योगी ध्यायी योगविचक्षणः ।
सोऽपि देशो भवेत्पूतः किं पुनस्तस्य बान्धवाः ।।७१।। [दक्ष० ७/४२-४५]
भिक्षां ददाति विप्राय यतये ब्रह्मचारिणे ।
स सर्वांल्लिभते कामांस्ततो याति परां गतिम् ।।७२।।
[लघ्वा० १/१५२]
भिक्षादाने सदा भिक्षोः सलिलं दक्षिणे करे ।
दत्त्वा भिक्षां प्रयच्छेत्तु पात्रे सव्यकरे स्थिते ।।७३।। [विष्णु०]
भिक्षां सत्कृत्य यो दद्याद्विष्णुरूपाय भिक्षवे ।
कृत्स्नां वा पृथिवीं दद्यात्तेन तुल्यं न तत्फलम् ।।७४।। [अत्रि०]
यतीनां पादयोः सम्यग्विष्णुसूक्तेन सिञ्चति ।
ते नरा विष्णुसायुज्यं प्राप्नुवन्ति न संशयः ।।७५।। [नारद०]
मौलौ तु सर्वे देवाश्च येषां तिष्ठन्ति निश्चितम् ।
अङ्गुष्ठाग्रे तु विष्णुश्च लक्ष्म्या सहापि तिष्ठति ।।७६।। [भृगु०]
विना पुरुषसूक्तेन अभिषिञ्चति यः पुमान् ।
त्रयाणामपि लोकेषु वास्तव्यं नाऽऽप्नुवन्ति ते ।।७७।।
सर्वेषामपराधानां यतिनिन्दा गरीयसी ।
यतिर्नारायणः साक्षात्तस्मात्तां परिवर्जयेत् ।।७८।। [हारीत०]

काले वा यदि वाऽकाले श्राद्धं कुर्यादतन्द्रितः ।
पितॄणां तृप्तिकामस्तु यतीन्प्राप्य द्विजोत्तमः ।।७९।।

[ब्रह्मा० पु०]

विना मांसेन मधुना विना दक्षिणयाऽऽशिषा ।
परिपूर्णं भवेच्छ्राद्धं यतिषु श्राद्धभोजिषु ।।८०।।

[दक्ष०]

अकृते वैश्वदेवे तु भिक्षुके गृहमागते ।
उद्धृत्य वैश्वदेवान्नं भिक्षुकन्तु विसर्जयेत् ।।८१।।
यतिश्च ब्रह्मचारी च विद्यार्थी गुरुपोषकः ।
अध्वगः क्षीणवृत्तिश्च षडेते भिक्षुकाः स्मृताः ।।८२।।
वैश्वदेवकृतं दोषं भिक्षुः शक्तो व्यपोहितुम् ।
न हि भिक्षुकृतं दोषं वैश्वदेवो व्यपोहति ।।८३।।
निवेशयति यः श्राद्धे पितृकर्मणि भिक्षुकम् ।
आकल्पकालिकी तृप्तिः पितॄणामुपजायते ।।८४।। [पराशर०]
ब्रह्मचारीयतीनां च वपनं यस्तु कारयेत् ।
नखकर्मादिकुर्वाणश्चक्षुष्माञ्जायते नरः ।।८५।।[संवर्त०]
यस्याऽऽश्रमे यतिर्नित्यं वर्तते मुनिसत्तमः ।
न तस्य दुर्लभं किंचित्त्रिषु लोकेषु विद्यते ।।८६।।
दुर्वृत्तो वा सुवृत्तो वा मूर्खो वा पण्डितोऽपि वा ।
वेषमात्रेण संन्यासी पूज्यः सर्वेश्वरो यथा ।।८७।।
ब्रह्मचर्याश्रमस्थानां ब्रह्मा देवः प्रकीर्तितः ।
गृहस्थानां च सर्वे स्युर्यतीनां तु महेश्वरः ।।८८।।
वानप्रस्थाश्रमस्थानामादित्यो देवता मतः ।
तस्मात्सर्वेषु कालेषु पूज्यः संन्यासिनां वरः ।।८९।।

[सू० सं० २/६/३५-३८]

यतिमागतं स्वागतमित्युक्त्वाऽभ्युत्थायाऽऽसनं पादशौचमभ्यञ्जनं च दत्त्वा कुशलमभिभाष्योपासीत । काले त्वन्नं भैक्षमुपाहरेत्स तस्योपचार इति ।।९०।।

[बौधायन०]

"चतुर्वेदोऽपि यो विप्रः सोमयाजी शतक्रतुः ।
तस्मादपि यतिः श्रेष्ठस्तिलमेरुवदन्तरम् ।।९१।।
आसनं शयनं वापि यतिं दृष्ट्वा त्यजेन्न यः ।
स मूढात्मा मृतस्तस्मात्तिर्यग्योनिषु जायते ।।९२।।
दुर्वृत्ते वा सुवृत्ते वा यतौ निन्दां न कारयेत् ।
यतीनां द्विष्यमाणस्तु नरकं प्रतिपद्यते ।।९३।। [वृद्धजा०]

"शुष्कमन्नं पृथक्पाकं यतये यः प्रयच्छति ।
स मूढो नरकं याति तेन पापेन कर्मणा ।।९४।।
यतिश्च ब्रह्मचारी च पक्वान्नस्वामिनावुभौ ।
तयोरन्नमदत्त्वा तु भुक्त्वा चान्द्रायणं चरेत् ।।९५।।
यतिहस्ते जलं दद्याद्भैक्षं दद्यात्पुनर्जलम् ।
तद्भैक्षं मेरुणा तुल्यं तज्जलं सागरोपमम् ।।९६।।
यतिर्यस्य गृहे भुङ्क्ते तत्र भुङ्क्ते हरिः स्वयम् ।
हरिर्यत्र गृहे भुङ्क्ते तत्र भुङ्क्ते जगत्त्रयम् ।।९७।।
सन्धितं यद् गृहस्थस्य पापमामरणान्तिकम् ।
निर्दहिष्यति तत्सर्वमेकरात्रोषितो यतिः ।।९८।।
अपचन्तं परित्यज्य पचन्तं यस्तु भोजयेत् ।
स तस्य सुकृतं दत्त्वा दुष्कृतं प्रतिपद्यते ।।९९।।
दुर्वृत्तो वा सुवृत्तो वा मूर्खः पण्डित एव वा ।
काषायमात्रवेषेण यतिः पूज्यो युधिष्ठिर ।।१००।।
भैक्षं संस्मृत्य यो दद्याद्विष्णुरूपाय भिक्षवे ।
कृत्स्नां वा पृथिवीं दद्यात्तेन तुल्यं न तद्भवेत् ।।१०१।।
पात्रासनं तथा दण्डः शिक्यं जलपवित्रकम् ।
संन्यासिने प्रदायैव गोदानफलमाप्नुयात् ।।१०२।।
व्याधितानां तु भिक्षूणां कुर्यादाश्रममण्डपम् ।
पथ्याद्यैर्वा परिचरेत् सोऽनन्तं फलमश्नुते ।।१०३।।"

[जमदग्नि०]

"भिक्षोः पाणौ जलं दद्याद्भैक्षं दद्यात्पुनर्जलम् ।
सा भिक्षा पर्वतैस्तुल्या तज्जलं सागरोपमम् ।।१०४।।

एवं दत्तं तु यद्भैक्षं तेन तृप्यन्ति देवताः ।।१०५।।" [वृद्धजा०]

"यतिहस्तगतं द्रव्यं येन गृह्णाति यो नरः ।
स मूढो नरकं याति तेन पापेन कर्मणा ।।१०६।।
त्रिदण्डं च पवित्रं च भैक्षभाजनमासनम् ।
संन्यासिने ददानो हि गोसहस्रफलं लभेत् ।।१०७।। [जावाल०]

"यस्य गेहे यतिर्नित्यं मुहूर्तमपि विश्रमेत् ।
किन्तस्यान्येन धर्मेण कृतकृत्यो भवेद्धि सः ।।१०८।।
ब्राह्मणानां च कोट्यास्तु यतिरेको विशिष्यते ।
ब्रह्मा विष्णुश्च रुद्रश्च ससाध्या मरुतस्तथा ।।१०९।।
सकृद्भुक्तेन यतिना पितृदेवाः सवासनाः ।
सर्वे ते तृप्तिमायान्ति दशवर्षाणि पञ्च च ।।११०।।
सूर्यखद्योतयोर्यद्वन्मेरुसर्षपयोर्यथा ।
अन्तरं हि महद्दृष्टं तथा भिक्षुगृहस्थयोः ।।१११।।
तस्य श्राद्धे विशेषेण पुण्येषु दिवसेषु च ।
नाम चोद्दिश्य दातव्यं यतीनां मुक्तिसाधनम् ।।११२।। [याज्ञ०]

"यत्र भिक्षुरहं तत्र तं च मां विद्धि पाण्डव ।
पूजिते पूजितोऽहं वै पूजिताः सर्वदेवताः ।।११३।।
सकृदेकेन भुक्तेन कोटिकोटिगुणं भवेत् ।
किं पुनर्बहुभिर्भुक्तैस्तेभ्यः संख्या न विद्यते ।।११४।।
संक्रान्तौ ग्रहणे चैव व्यतीपाते दिनक्षये ।
श्राद्धकालः स विज्ञेयो भिक्षौ तु गृहमागते ।।११५।।

काले वा यदि वाऽकाले भिक्षुर्यस्य गतो गृहम् ।
पितृनुद्दिश्य दातव्यं पितृणां तृप्तिमिच्छताम् ।।११६।। [महा०]

"बटौ तु समदत्तं स्याद् गृहस्थे द्विगुणं भवेत् ।
वानप्रस्थे तु त्रिगुणं यतौ दत्तमनन्तकम् ।।११७।।"

[शातातप०]

*

# यतीनामन्त्यसंस्कारविधिः

यतीनामन्त्यसंस्कारविधिं व्याख्यास्यामः । गृहस्थः शुद्धात्माऽशेषतः स्नात्वा गन्धपुष्पादिभिरलंकृत्य शिक्ये शरीरमारोप्य घोषितं जयशब्दैर्दुन्दुभीनां रवैरपि ग्रामात्प्राचीमुदीचीं गत्वा शुद्धदेशं समाश्रयेत् । नदीतीरेऽश्वत्थवृक्षस्य ब्रह्मवृक्षस्य वाऽधस्ताद्देवयजनं दण्डायामप्रमाणं खनित्वा लवणं प्रक्षिप्य दर्भान्संस्तीर्य गायत्र्या शरीरं प्रक्षाल्य पुरुषसूक्तेन स्नापयित्वा शङ्खेन प्रणवेन शतसंख्येन स्नाप्य षोडशोपचारैर्गन्धपुष्पैरलंकृत्य "विष्णो हव्यं रक्षस्व" इति शरीरं कुण्ड़ निधाय "इदं विष्णुर्विचक्रमे" इति दक्षिणहस्ते दण्डं भङ्क्त्वा निधाय "हंसः शुचिषत" इति हृदयदेशे जपेत् । "ब्रह्म जज्ञानम्" इति मूर्धदिशे जपेत्। पुरुषसूक्तेन भ्रुवोर्मध्ये जपेत् । "ॐ भूमिर्भूमिमगान्माता मातरमप्यगात् । भूयास्म पुत्रैः पशुभिर्यो नो द्वेष्टि स भिद्यताम् ।" इति मन्त्रेण मूर्धानं भिन्द्यादश्मना परशुना वा । ॐ भूर्भुवः स्वरोमित्यभिमन्त्र्य दर्भैराच्छाद्य मध्ये लवणेन घनतरेण सप्तव्याहृतिभिः प्रणवेन च देवयजनं पूरयेत् । "अग्निनाऽग्निः समिध्यते" इत्यनुमन्त्रयेत् । न तत्र शेषसंस्कारोऽस्ति। अन्यथा ग्राम्यादि- भक्षणेऽनावृष्टिर्भवति । तस्माद्भूमिं भृशं खात्वा मृदाऽऽच्छादयेत्।

सर्वसङ्गनिवृत्तस्य ध्यानयोगरतस्य च ।<br>
न तस्य दहनं कार्यं नाशौचं नोदकक्रिया ।।१।।<br>
निदध्यात्प्रणवेनैव ध्यानभिक्षोः कलेवरम् ।<br>
प्रोक्षणं खननं चैव सर्वं तेनैव कारयेत् ।।२।।<br>
यतीन्वहन्स्पृशंश्चैव स्नानमात्रेण शुध्यति ।<br>
अश्वमेधफलं सर्वे प्राप्नुवन्ति पृथक्पृथक् ।।३।।<br>
एकोद्दिष्टं जलं पिण्डं नाशौचं प्रेतसत्क्रियाम्।<br>
न कुर्यात्पार्वणादन्यद्ब्रह्मीभूताय कल्पते ।।४।। [बौधायन०]<br>
यतौ मृते च वपनं नोदकं नैव च क्रिया ।।५।।<br>
नाशौचं नैव शोकश्च बन्धूनां गोत्रिणामपि ।<br>
वृषोत्सर्गं च दाहं च विपन्ने स्याद् गुरौ यतौ ।।६।।<br>
सपिण्डीकरणं तेषां न कर्तव्यं सुतेन तु ।<br>
एकोद्दिष्टं न कुर्वीत यतीनां तु कदाचन ।।७।।

मृते न दहनं कार्यं परहंसस्य सर्वदा ।
अश्वत्थस्थापनं कार्यं तद्देशेऽध्वर्युणां मुने ।।८।।
अश्वत्थे स्थापिते तेन स्थापितो हि महेश्वरः ।
दर्शनात्स्पर्शनात्तस्य सर्वं नश्यति पातकम् ।।९।।
कुटीचकं संप्रदहेद्बहूदकं जले क्षिपेत् ।
हंसं चैव तु निक्षिप्य परहंसं विकीरयेत् ।।१०।। [उशना०]
"ब्रह्मनिष्ठे च संन्यस्ते पितर्युपरते श्रुते ।
सपिण्डीकरणं नैव नाशौचं नोदकक्रिया ।।११।।
अहन्येकादशे प्राप्ते पार्वणं तु विधीयते ।
सपिण्डीकरणं नैतत्कर्तव्यं तु सुतादिभिः ।।१२।।
सद्यः संन्यसनादेव प्रेतत्वं नैव जायते ।
एकोद्दिष्टं न कर्तव्यं संन्यस्तानां कदाचन ।।१३।।

[बौधायन०]

"ब्रह्मीभूते च संन्यस्ते ताते च निधनं गते ।
न तस्य सूतकं कार्यं न च पिण्डोदकक्रियाः ।
ब्रह्मीभूतस्य तस्यात्र कर्तव्यं नैव विद्यते ।।१४।।"[शौनक०]
द्वादशाहमनध्यायं कुर्याच्छिष्यः समाहितः ।
खननं वहनं स्पर्शं संस्कुर्वञ्छुद्धिमृच्छति ।।१५।।
स्नानमात्रेण लभते अश्वमेधं पदे पदे ।
अपुत्रो लभते पुत्रं चिरंजीविनमुत्तमम् ।।१६।।
निषेकादिश्मशानान्ता विधयो ब्राह्मणाश्रिताः ।
तस्माद्यतेस्तु संस्कारं मन्त्रवित्कुरुते गृही ।।१७।।
यतिदेहं गृही स्पृष्ट्वा स्नानमात्रेण शुध्यति ।
अश्वमेधफलं सर्वं संप्राप्नोति पदे पदे ।।१८।।
असंस्कृतं विशीर्येत यत्र देशे कलेवरम् ।
धर्मलोपो भवेत्तत्र दुर्भिक्षं मरणादिकम् ।।१९।।

[जातूकर्ण्य०]

यतेः कार्याः क्रियास्तस्य यस्य न ब्रह्मणि स्थितिः ।
ब्रह्मीभूतस्य तु यतेर्न दाहाद्याः कथंचन ।।२०।।

[कपिल०]

ब्रह्मदण्डादियुक्तानां येषां नास्त्यग्निसत्क्रिया ।
श्राद्धादिसत्क्रियाभाजो न भवन्तीह ते क्वचित् ।।२१।।

[गोभिल० ९५]

''संन्यस्तानां कदाचित्स्यान्नाशौचं नोदकक्रियाः ।
भिक्षोर्मृतस्य कायोऽयं दर्भग्रन्थिहिरण्ययोः ।
तुलितः सर्वदा प्रोक्तः पवित्रः पावनो महत् ।।२२।।

[लौगाक्षि०]

तीर्थे श्वपचगृहे वा तनुं विहाय याति कैवल्यम् । प्राणानवकीर्य याति कैवल्यम् । तं पश्चाद्दिग्बलिं कुर्यादथवा खननं चरेत् । पुंसः प्रव्रजनं प्रोक्तं नेतराय कदाचन ।

न शौचं नाग्निकार्यं च न पिण्डं नोदकक्रिया ।
न कुर्यात्पार्वणादीनि ब्रह्मभूताय भिक्षवे ।।२३।।
दग्धस्य दहनं नास्ति पक्वस्य पचनं यथा ।
ज्ञानाग्निदग्धदेहस्य न च श्राद्धं न च क्रिया ।।२४।।

[पैं० उ० ४/५-७]

अथ कुटीचकविधिः —

पुत्रैः कुटीचकस्य त्वज्ञानिनो दहनादिकः क्रियाकलापः कार्य एव ।
संनिकृष्टे यतौ येषां पितर्युपरते सुतैः ।
दहनं तस्य कर्तव्यं श्राद्धपिण्डोदकक्रियाः ।।२५।। इतिस्मृतेः
अनग्नेर्दहनं कार्यं पूर्वभिक्षोर्यथाविधि ।
विदुषस्तु न तत्कार्यं नैकोद्दिष्टानि कर्हिचित् ।।२६।। [क्रतु०]

पूर्वभिक्षुः कुटीचकः -

नारायणबलिं चास्य कुर्वीत द्वादशेऽहनि ।
कुर्याद्विष्णोर्महापूजां पायसं च निवेदयेत् ।।२७।।
अग्नौ हुत्वा तु तच्छेषं व्याहृतिभिः समाहितः ।
यतीन्गृहस्थान्साधून्वा गृहीत्वा द्वादशावरान् ।।२८।।
अभ्यर्च्य गन्धपुष्पाद्यैर्मन्त्रैर्द्वादशनामभिः ।
संपूज्य हव्येनान्नेन दक्षिणां च निवेदयेत् ।।२९।।

त्रयोदशं द्विजश्रेष्ठमात्मसंज्ञं यतेन्द्रियम् ।
विष्णुं यथा तथाऽभ्यर्च्य पाद्यार्घ्याद्यैर्विधानतः ।।३०।।
दद्यात्पुरुषसूक्तेन पुण्यहव्यादिकं क्रमात् ।
वस्त्रालंकारकाद्यानि यथाशक्ति प्रदापयेत् ।।३१।।
उच्छिष्टसंनिधौ तस्य दर्भानास्तीर्य भूतले ।
ॐ भूः स्वधों भुवः स्वधों स्वः स्वधेति बलीन्हरेत् ।।३२।।
एवं यः कुरुते विद्वान्नारायणबलिं द्विजः ।
विष्णुलोकमवाप्नोति पुरुषो नात्र संशयः ।।३३।।

[बौधायनः ]

## त्रिवृत्सूत्रम्

हृदिस्था देवताः सर्वा हृदि प्राणाः प्रतिष्ठिताः ।
हृदि प्राणश्च ज्योतिश्च त्रिवृत्सूत्रं च यन्महत् ।।
हृदि चैतन्ये तिष्ठति ।।१।।

## बहिःसूत्रम्

यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् ।
आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ।।२।।

## ब्रह्मसूत्रम्

सशिखं वपनं कृत्वा वहिः सूत्रं त्यजेद्बुधः ।
यदक्षरं परं ब्रह्म तत्सूत्रमिति धारयेत् ।।३।।
यदक्षरं परं ब्रह्म सूत्रं नाम परं पदम् ।
तत्सूत्रं विदितं येन स विप्रो वेदपारगः ।।४।।
येन सर्वमिदं प्रोतं सूत्रे मणिगणा इव ।
तत्सूत्रं धारयेद्योगी योगवित्तत्त्वदर्शिवान् ।।५।।
बहिः सूत्रं त्यजेद्विद्वान्योगमुत्तममास्थितः
ब्रह्मभावमयं सूत्रं धारयेद्यः स चेतनः । [ब्र०उ०]
धारणात्तस्य सूत्रस्य नोच्छिष्टो नाशुचिर्भवेत् ।।६।।

[वा०प० उ० ३/७७-८०]

*

## ज्ञानशिखादीनां मुख्यब्राह्मणलिङ्गता

सूत्रमन्तर्गतं येषां ज्ञानयज्ञोपवीतिनाम् ।
ते वै सूत्रविदो लोके ते च यज्ञोपवीतिनः ।।७।।
ज्ञानशिखा ज्ञाननिष्ठा ज्ञानयज्ञोपवीतिनः ।
ज्ञानमेव परं तेषां पवित्रं ज्ञानमुच्यते ।।८।।
अग्नेरिव शिखा नान्या यस्य ज्ञानमयी शिखा । [ब्र०उ०]
स शिखीत्युच्यते विद्वानितरे केशधारिणः ।।९।।

[ना० प०उ० ८१-८५]

## क्रियाङ्गसूत्रम्

कर्मण्यधिकृता ये तु वैदिका ब्राह्मणादयः ।
तैः संधार्यमिदं सूत्रं क्रियाङ्गं तद्धि वै स्मृतम् ।। [ना० प० उ० ३/८४]

## निरुपचरितब्राह्मण्यम्

शिखा ज्ञानमयी यस्य उपवीतं च तन्मयम् ।
ब्राह्मण्यं सकलं तस्य इति ब्रह्मविदो विदुः ।। [ना० प० उ० ३/८५]

## यज्ञोपवीतयाथात्म्यम्

इदं यज्ञोपवीतं तु पवित्रं यत्परायणम् ।
विद्वान्यज्ञोपवीती स्यात्स यज्ञः स च यज्ञवित् ।।

## अयज्ञोपवीतिनो ब्राह्मणत्वम्

भगवन् कथमयज्ञोपवीत्यशिखी सर्वकर्मपरित्यक्तः कथं ब्रह्मनिष्ठापरः कथं ब्राह्मण इति ब्रह्मा पृच्छति । स होवाच विष्णुर्भोऽर्भक यस्यास्त्यद्वैतमात्मविज्ञानं तदेव यज्ञोपवीतम्। तस्य ध्याननिष्ठैव शिखा । तत्कर्म स पवित्रम् । स

सर्वकर्मकृत् । स ब्राह्मणः। स ब्रह्मनिष्ठापरः । स देवः । स ऋषिः । स तपस्वी । स श्रेष्ठः । स एव सर्वज्येष्ठः । स एव जगद्गुरुः। स एवाहं विद्धि । लोके परमहंसपरिव्राजको दुर्लभतरो यद्येकोऽस्ति। स एव नित्यपूतः । स एव वेदपुरुषो महापुरुषो यस्तच्चिन्मय्येवावतिष्ठते । अहं च तस्मिन्नेवावस्थितः। स एव नित्यतृप्तः । स शीतोष्णसुखदुःखमानावमानवर्जितः । स निन्दामर्षसहिष्णुः । स षड्ूर्मिवर्जितः। षड्भावविकारशून्यः । स ज्येष्ठाज्येष्ठव्यवधानरहितः। स स्वव्यतिरेकेण नान्यद्द्रष्टा। आशाम्बरो न नमस्कारो न स्वाहाकारो न स्वधाकारश्च न विसर्जनपरो निन्दास्तुतिव्यतिरिक्तो न मन्त्रतन्त्रोपासको देवान्तरध्यानशून्यो लक्ष्यालक्ष्यनिवर्तकः सर्वोपरतः स । सच्चिदानन्दाद्वयचिद्घनः सम्पूर्णानन्दैकबोधो ब्रह्मैवाहमस्मीत्यनवरतं ब्रह्मप्रणवानुसंधानेन यः कृतकृत्यो भवति स ह परमहंसपरिव्राडिति ॥

# विद्वद्देहशरीरवर्णनादिकम्

सत्यवाग्ज्ञानवैराग्याभ्यां विशिष्टदेहावशिष्टो वसेत् । ज्ञानशरीरं वैराग्यं जीवनं विद्धि शान्तिदान्ती नेत्रे मनो मुखं बुद्धिः कला पञ्चविंशति तत्त्वान्यवयवा अवस्था पञ्चमहाभूतानि कर्मभक्तिज्ञानवैराग्यं शाखा जाग्रत्स्वप्नसुषुप्तितुरीया-श्चतुर्दशकरणानि पङ्कस्तम्भाकाराणीति। एवमपि नावमतिपङ्कं कर्णधार इव यन्तेव गजं स्वबुद्ध्या वशीकृत्य स्वव्यतिरिक्तं सर्वं कृतकं नश्वरमिति मत्वा विरक्तः पुरुषः सर्वदा ब्रह्माहमिति व्यवहरेत्। नान्यत्किंचिद्वेदितव्यं स्वव्यतिरेकेण । जीवन्मुक्तो वसेत् । कृतकृत्यो भवति। न नाहं ब्रह्मेति व्यवहरेत्किन्तु ब्रह्माहमस्मीत्यजस्रं जाग्रत्स्वप्नसुषुप्तिषु । तुरीयावस्थां प्राप्य तुरीयातीतत्वं व्रजेत् ॥

[ना० प० उ० ६/१]

*

# तुरीयातीतत्वप्राप्त्युपायः

दिवा जाग्रन्नक्तं स्वप्नं सुषुप्तमर्धरात्रं गतमित्येकावस्थायां चतस्रोऽवस्थास्त्वेकैककरणाधीनानां चतुर्दशकरणानां व्यापारश्चक्षुरादीनाम्। चक्षुषो रूपग्रहणं श्रोत्रयोः शब्दग्रहणं जिह्वाया रसास्वादनं घ्राणस्य गन्धग्रहणं वचसो वाग्व्यापारः पाणेरादानं पादयोः संचारः पायोरुत्सर्ग उपस्थस्यानन्दग्रहणं त्वचः स्पर्शग्रहणम्। तदधीना च विषयग्रहणबुद्धिः बुद्ध्या बुध्यति चित्तेन चेतयति अहंकारेणाहंकरोति। विसृज्य जीव एतान्देहाभिमानेन जीवो भवति। गृहाभिमानेन गृहस्थ इव शरीरे जीवः संचरति। प्राग्दले पुण्यावृत्तिराग्नेय्यां निद्रालयं दक्षिणायां क्रौर्यबुद्धिः नैर्ऋत्यां पापबुद्धिः पश्चिमे क्रीडारतिर्वायव्यां गमने बुद्धिरुत्तरे शान्तिरीशान्ये ज्ञानं कर्णिकायां वैराग्यं केसरेष्वात्मचिन्ता इत्येवं वक्रं ज्ञात्वा जीवदवस्थां प्रथमं जाग्रद्द्वितीयं स्वप्नं तृतीयं सुषुप्तं चतुर्थं तुरीयं चतुर्भिर्विरहितं तुरीयातीतम्। विश्वतैजसप्राज्ञतटस्थभेदैरेक एव एको देवः साक्षी निर्गुणश्च तद्ब्रह्माहमिति व्याहरेत्। नो चेज्जाग्रदवस्थायां जाग्रदादिचतस्रोऽवस्था स्वप्ने स्वप्नादि चतस्रोऽवस्थाः। सुषुप्ते सुषुप्त्यादिचतस्रोऽवस्थाः तुरीये तुरीयादि चतस्रोऽवस्थाः न त्वेवं तुरीयातीतस्य निर्गुणस्य। स्थूलसूक्ष्मकारणरूपैर्विश्वतैजसप्राज्ञेश्वरैः सर्वावस्थासु साक्षात्त्वेक एवावतिष्ठते। उत तटस्थो द्रष्टा तटस्थो न द्रष्टा द्रष्टृत्वान्न द्रष्टैव कर्तृत्वभोक्तृत्वाहंकारादिभिः स्पृष्टो जीवः जीवेतरो न स्पृष्टः। जीवोऽपि न स्पृष्ट इति चेन्न। जीवाभिमानेन क्षेत्राभिमानः। शरीराभिमानेन जीवत्वम्। जीवत्वं घटाकाशवद्व्यवधानेऽस्ति। व्यवधानवशादेव हंसः सोऽहमिति मन्त्रेणोच्छ्वासनिःश्वासव्यपदेशेनानुसंधानं करोति। एवं विज्ञाय शरीराभिमानं त्यजेन्न शरीराभिमानी भवति। स एव ब्रह्मेत्युच्यते॥

[ना० प० उ० ६/१]

*

# अतिवर्णाश्रमी

सर्वोपाधिविनिर्मुक्तं चैतन्यं च निरञ्जनम् ।
तद्ब्रह्माहमिति ज्ञात्वा कथं वर्णाश्रमी भवेत् ॥१॥
ब्राह्मण्याद्यात्मके देहेऽनात्मन्यात्मेति भावनात् ।
श्रुतेः किंकरतामेति वाङ्मनःकायकर्मसु ॥२॥
दग्धाखिलाधिकारश्चेद्ब्रह्मज्ञानाग्निना मुनिः ।
वर्तमानः श्रुतेर्मूर्ध्नि नैव स्याद्विधिकिंकरः ॥३॥

उत्तमः पञ्चधा प्रोक्तो गुरुर्ब्रह्मात्मवेदिभिः ।
ब्रह्मचारी गृहस्थश्च वनस्थश्चैव भिक्षुकः ॥४॥
अतिवर्णाश्रमी चेति क्रमाच्छ्रेष्ठा विचक्षण ।
अश्रेष्ठानां हरे श्रेष्ठा गुरवः परिकीर्तिताः ॥५॥
ब्रह्मचारी गृहस्थस्य वनस्थस्य यतेरपि ।
विद्योत्कर्षबलेनैव गुरुर्भवति नान्यथा ॥६॥
गृहस्थोऽपि वनस्थस्य यतेरप्यम्बुजेक्षण ।
विद्योत्कर्षबलेनैव गुरुर्भवति नान्यथा ॥७॥
वानप्रस्थाश्रमस्थोऽपि तथा संन्यासिनां हरे ।
विद्योत्कर्षबलेनैव गुरुर्भवति नान्यथा ॥८॥
अतिवर्णाश्रमी प्रोक्तो गुरुः सर्वाधिकारिणाम् ।
न कस्यापि भवेच्छिष्यो यथाऽहं पुरुषोत्तम ॥९॥
न तत्समो नाधिकश्चास्मिंल्लोकेऽस्त्येव न संशयः ॥१०॥
यः शरीरेन्द्रियादिभ्यो विभिन्नं (विहीनं) सर्वसाक्षिणम् ।
पारमार्थिकविज्ञानं सुखात्मानं स्वयंप्रभम् ॥११॥

[ना०प०उ० ६/९]

परतत्त्वं विजानाति सोऽतिवर्णाश्रमी भवेत् ।
यो वेदान्तमहावाक्यश्रवणेनैव केशव ॥१२॥
आत्मानमीश्वरं वेद सोऽतिवर्णाश्रमी भवेत् ।
योऽवस्थात्रयनिर्मुक्तमवस्थात्रयसाक्षिणम् ॥१३॥

महादेवं विजानाति सोऽतिवर्णाश्रमी भवेत् ।
वर्णाश्रमादयो देहे मायया परिकल्पिताः ।।१४।।
नाऽऽत्मनो बोधरूपस्य मम ते सन्ति सर्वदा ।
इति यो वेद वेदान्तैः सोऽतिवर्णाश्रमी भवेत् ।।१५।।

[ना० प० उ० ६/९]

आदित्यसन्निधौ लोकश्चेष्टते स्वयमेव तु ।
तथा मत्सन्निधावेव चेष्टते सकलं जगत् ।।१६।।
इति यो वेद वेदान्तैः सोऽतिवर्णाश्रमी भवेत् ।
स्वर्णे च हारकेयूरकटकस्वस्तिकादयः ।।१७।।
कल्पिता मायया तद्वज्जगन्मय्येव सर्वदा ।
इति यो वेद वेदान्तैः सोऽतिवर्णाश्रमी भवेत् ।।१८।।
शुक्तिकायां यथा तारं कल्पितं मायया तथा ।
महदादि जगन्मायामयं मय्येव कल्पितम् ।।१९।।
इति यो वेद वेदान्तैः सोऽतिवर्णाश्रमी भवेत् ।
चाण्डालदेहे पश्वादिशरीरे ब्रह्मविग्रहे ।।२०।।
अन्येषु तारतम्येन स्थितेषु पुरुषोत्तम ।
व्योमवत्सर्वदा व्याप्तः सर्वसम्बन्धवर्जितः ।।२१।।
एकरूपो महादेवः स्थितः सोऽहं परामृतः ।
इति यो वेद वेदान्तैः सोऽतिवर्णाश्रमी भवेत् ।।२२।।
विनष्टदिग्भ्रमस्यापि यथापूर्वं विभाति दिक् ।
तथा विज्ञानविध्वस्तं जगन्मे भाति तन्न हि ।।२३।।
इति यो वेद वेदान्तैः सोऽतिवर्णाश्रमी भवेत् ।
यथा स्वप्नप्रपञ्चोऽयं मयि मायाविजृम्भितः ।।२४।।
तथा जागत्प्रपञ्चोऽपि परमायाविजृम्भितः ।
इति यो वेद वेदान्तैः सोऽतिवर्णाश्रमी भवेत् ।।२५।।
यस्य वर्णाश्रमाचारो गलितः स्वात्मदर्शनात् ।
स वर्णानाश्रमान्सर्वानतीत्य स्वात्मनि स्थितः ।।२६।।

योऽतीत्य स्वाश्रमान्वर्णानात्मन्येव स्थितः पुमान्।
सोऽतिवर्णाश्रमी प्रोक्तः सर्ववेदान्तवेदिभिः ।।२७।।

[ना० प० उ० ६/१२-१३]

न देहो नेन्द्रियप्राणो न मनोबुद्ध्यहंकृती ।
न चित्तं नैव माया च न च व्योमादिकं जगत् ।।२८।।
न कर्ता नैव भोक्ता च न च भोजयिता तथा ।
केवलं चित्सदानन्दब्रह्मैवाऽऽत्मा यथार्थतः ।।२९।।
जलस्य चलनादेव चञ्चलत्वं यथा रवेः ।
तथाऽहङ्कारसम्बन्धादेव संसार आत्मनः ।।३०।।
तस्मादन्यगता वर्णा आश्रमा अपि केशव ।
आत्मन्यारोपिता एव भ्रान्त्या तेनाऽऽत्मवेदिनः ।।३१।।
न विधिर्न निषेधश्च न वर्ज्यावर्ज्यकल्पना ।
आत्मविज्ञानिनामस्ति तथा नान्यज्जनार्दन ।।३२।।
आत्मविज्ञानिनो निष्ठामीदृशीमम्बुजेक्षण ।
मायया मोहिता मर्त्या नैव जानन्ति सर्वदा ।।३३।।
न मांसचक्षुषां निष्ठा ब्रह्मविज्ञानिनामियम् ।
द्रष्टुं शक्या स्वतः सिद्धा विदुषः सैव केशव ।।३४।।
यत्र सुप्ता जना नित्यं प्रबुद्धस्तत्र संयमी ।
प्रबुद्धा यत्र ते विद्वान्सुषुप्तस्तत्र केशव ।।३५।।
एवमात्मानमद्वन्द्वं निर्विकल्पं निरञ्जनम् ।
नित्यं शुद्धं निराभासं संविन्मात्रं परामृतम् ।।३६।।
यो विजानाति वेदान्तैः स्वानुभूत्या च निश्चितम् ।
सोऽतिवर्णाश्रमी नान्यः स एव गुरुसत्तमः ।।३७।।
स एव वेदवित्तमः स एव मोक्षकप्रदः
स एव सर्वमोचकः स एव सर्वकारणम् ।
स एव सत्यचिद्धनः स एव मुक्तिरुत्तमा
स एव सर्वमुक्तिदः स एव सर्वमच्युत ।।३८।।

[सू० सं०]

*

# ब्राह्मणलक्षणम्

**वज्रसूचीं प्रवक्ष्यामि शास्त्रमज्ञानभेदनम् ।**
**दूषणं ज्ञानहीनानां भूषणं ज्ञानचक्षुषाम् ।।**

ब्रह्मक्षत्रियवैश्यशूद्रा इति चत्वारो वर्णास्तेषां वर्णानां ब्राह्मण एव प्रधान इति वेदवचनानुरूपं स्मृतिभिरप्युक्तम् । तत्र चोद्यमस्ति को वा ब्राह्मणो नाम किं जीवः किं देहः किंः जातिः किं ज्ञानं किं कर्म किं धार्मिक इति। तत्र प्रथमो जीवो ब्राह्मण इति चेत्तन्न । अतीतानागतानेकदेहानां जीवस्यैकरूपत्वात् एकस्यापि कर्मवशादनेकदेहसंभवात् । सर्वशरीराणां जीवस्यैकरूपत्वाच्च । तस्मान्न जीवो ब्राह्मण इति । तर्हि देहो ब्राह्मण इति चेत्तन्न । आचाण्डालादिपर्यन्तानां मनुष्याणां पाञ्चभौतिकत्वेन देहस्यैकरूपत्वाज्जरामरणधर्माधर्मादिसाम्यदर्शनाद्ब्राह्मणः श्वेतवर्णः क्षत्रियो रक्तवर्णो वैश्यः पीतवर्णः शूद्रः कृष्णवर्ण इति नियमाभावात् । पित्रादिशरीरदहने पुत्रादीनां ब्रह्महत्यादि-दोषसंभवाच्च । तस्मान्न देहो ब्राह्मण इति । तर्हि जातिः ब्राह्मण इति चेत्तन्न । तत्र जात्यन्तरजन्तुष्वनेकजातिसंभवा महर्षयो बहवः सन्ति । ऋष्यशृङ्गो मृग्याः, कौशिकः कुशात् , जाम्बूको जम्बूकात्, वाल्मीको वल्मीकात् व्यासः कैवर्तकन्यकायाम् । शशपृष्ठात् गौतमः, वसिष्ठ उर्वश्याम्, अगस्त्यः कलशे जात इति श्रुतत्वात् । एतेषां जात्या विनाप्यग्रे ज्ञानप्रतिपादिता ऋषयो बहवः सन्ति । तस्मान्न जातिर्ब्राह्मण इति। तर्हि ज्ञानं ब्राह्मण इति चेत्तन्न । क्षत्रियादयोऽपि परमार्थदर्शिनोऽभिज्ञाः बहवः सन्ति । तस्मान्न ज्ञानं ब्राह्मण इति । तर्हि कर्म ब्राह्मण इति चेत्तन्न। सर्वेषां प्राणिनां प्रारब्धसंचितागामिकर्मसाधर्म्यदर्शनात्कर्माभिप्रेरिताः सन्तो जनाः क्रियाः कुर्वन्तीति । तस्मान्न कर्म ब्राह्मण इति । तर्हि धार्मिको ब्राह्मण इति चेत्तन्न । क्षत्रियादयो हिरण्यदातारो बहवः सन्ति । तस्मान्न धार्मिको ब्राह्मण इति । तर्हि को वा ब्राह्मणो नाम ।

यः कश्चिदात्मानमद्वितीयं जातिगुणक्रियाहीनं षडूर्मिषड्भावेत्यादि सर्वदोषरहितं सत्यज्ञानानन्दानन्तस्वरूपं स्वयं निर्विकल्पमशेषकल्पाधारम-शेषभूतान्तर्यामित्वेन वर्तमानमन्तर्बहिश्चाकाशवदनुस्यूतमखण्डानन्द-

स्वभावमप्रमेयमनुभवैकवेद्यमपरोक्षतया भासमानं करतलामलकवत्साक्षादपरोक्षीकृत्य कृतार्थतया कामरागादिदोषरहितः शमदमादिसम्पन्नो भावमात्सर्यतृष्णाव्यामोहादिरहितो दम्भाहंकारादिभिरसंस्पृष्टचेता वर्तत एवमुक्तलक्षणो यः स एव ब्राह्मण इति श्रुतिस्मृतिपुराणेतिहासानामभिप्रायः । अन्यथा हि ब्राह्मणत्वसिद्धिः नास्त्येव ।।१।। [वज्र० उ०]

तथा च स्मृतिः –

**"जन्मना जायते शूद्रः संस्कारेण द्विजोत्तमः ।**
**वेदाभ्यासी भवेद्विप्रो ब्रह्म जानाति ब्राह्मणः ।।२।।"**

तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेद्बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिरमौनं च मौनं च निर्विद्याथ ब्राह्मणः ।।३।। [बृ० उ० ३/५/१]

"तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवाऽऽत्मानं पश्यति सर्वमात्मानं पश्यति नैनं पाप्मा तरति सर्वं पाप्मानं तरति नैनं पाप्मा तपति सर्वं पाप्मानं तपति विपापो विरजोऽविचिकित्सो ब्राह्मणो भवति ।।४।।" [बृ० उ० ४/४/२३]

**"न जातिः पूज्यते राजन् गुणाः कल्याणकारकाः ।**
**चाण्डालमपि वृत्तस्थं तं देवा ब्राह्मणं विदुः ।।५।।**

[वृद्धगौ० २१/८]

**"य एतदक्षरं गार्गि विदित्वास्माल्लोकात्प्रैति स ब्राह्मणः ।।"६।।**

[बृ उ० ३/८/१०]

**"क्षमा दया च विज्ञानं सत्यं चैव दमः शमः ।**
**अध्यात्मनिरतज्ञानमेतद्ब्राह्मणलक्षणम् ।।७।।**

[कू० पु० २/१५/२७] [पद्म पु० स्व० ख० ३/५४/२५]

**"जन्मना यस्तु निर्मुक्तो मरणेन तथैव च ।**
**आधिभिर्व्याधिभिश्चैव तं देवा ब्राह्मणं विदुः ।।८।।** [शंख० ७/१०]

**"यन्न सन्तं न चासन्तं नाश्रुतं न बहुश्रुतम् ।**
**न सुवृत्तं न दुर्वृत्तं वेद कश्चित्स ब्राह्मणः ।।९।।**

[ना० प० उ० ४/३४]

**अनुत्तरीयवसनमनुपस्तीर्णशायिनम् ।**
**बाहूपधानं शाम्यन्तं तं देवा ब्राह्मणं विदुः ।।१०।।**

द्वन्द्वारामेषु सर्वेषु य एको रमते मुनिः ।
परेषामननुध्यायंस्तं देवा ब्राह्मणं विदुः ।।११।।
येन सर्वमिदं बुद्धं प्रकृतिर्विकृतिश्च या ।
गतिज्ञः सर्वभूतानां तं देवा ब्राह्मणं विदुः ।।१२।।
अभयं सर्वभूतेभ्यः सर्वेषामभयं यतः ।
सर्वभूतात्मभूतो यस्तं देवा ब्राह्मणं विदुः ।।१३।।

[महा० शा० २६९/३०-३३]

वाचो वेगं मनसः क्रोधवेगं
विधित्सावेगमुदरोपस्थवेगम् ।
एतान् वेगान् यो विषहेदुदीर्णां-
स्तं मन्येऽहं ब्राह्मणं वै मुनिं च ।।१४।।

[महा० शा० २९९/१४]

"प्रत्यक्षदर्शी लोकानां सर्वदर्शी भवेन्नरः ।
सत्ये वै ब्राह्मणस्तिष्ठंस्तद् विद्वान् सर्वविद्भवेत् ।।१५।।

[महा० उद्यो० ४३/६२]

येन पूर्णमिवाकाशं भवत्येकेन सर्वदा ।
शून्यं येन जनाकीर्णं तं देवा ब्राह्मणं विदुः ।।१६।।
येन केनचिदाच्छन्नो येन केनचिदाशितः ।
यत्र क्वचन शायी च तं देवा ब्राह्मणं विदुः ।।१७।।

[पद्म० पु० १/१५/३६८]

अहेरिव गणाद् भीतः सौहित्यान्नरकादिव ।
कुणपादिव च स्त्रीभ्यस्तं देवा ब्राह्मणं विदुः ।।१८।।
न क्रुद्ध्येन्न प्रहृष्येच्च मानितोऽमानितश्च यः ।
सर्वभूतेष्वभयदस्तं देवा ब्राह्मणं विदुः ।।१९।।

[महा० शा० २४५/११-१४]

विमुक्तं सर्वसङ्गेभ्यो मुनिमाकाशवत् स्थितम् ।
अस्वमेकचरं शान्तं तं देवा ब्राह्मणं विदुः ।।२०।।

निराशिषमनारम्भं निर्नमस्कारमस्तुतिम् ।
निर्मुक्तं बन्धनैः सर्वैस्तं देवा ब्राह्मणं विदुः ।।२१।।

[महा० शा० २४५/२२,२४]

"कन्थाकौपीनवासा यो दण्डधृग्ध्यानतत्परः ।
एकाकी रमते नित्यं तं देवा ब्राह्मणं विदुः ।।२२।।
श्रद्धा ध्यानं तपः शौचं वित्तं यस्य चतुष्टयम् ।
स्मरणं चाद्वितीयस्य तं देवा ब्राह्मणं विदुः ।।२३।।
विमुक्तः सर्वसङ्गेभ्यो मुनिराकाशवत्स्थितः ।
विष्णुप्रियकरः शान्तस्तं देवा ब्राह्मणं विदुः ।।२४।।
जीवितं यस्य धर्मार्थं धर्मो रत्यर्थमेव च ।
अहोरात्रादि पुण्यार्थं तं देवा ब्राह्मणं विदुः।।२५।।
निवारितसमारम्भं निर्नमस्कारमस्तुतिम् ।
अक्षीणं क्षीणकर्माणं तं देवा ब्राह्मणं विदुः ।।२६।।

[पद्म० पु० १/१५/३७८-३८०]

"शिखाज्ञानमयी यस्य पवित्रं च तपोमयम् ।
ब्राह्मण्यं पुष्कलं तस्य मनुः स्वायम्भुवोऽब्रवीत् ।।२७।।

[म०पु० १/४४/२९]

"शिखा ज्ञानमयी यस्य उपवीतं च तन्मयम् ।
ब्राह्मण्यं सकलं तस्य इति वेदानुशासनम् ।।२८।

[शाट्या०उ० १८]

## ज्ञानयुक्तयमाद्यष्टाङ्गयोगः

शीतोष्णाहारनिद्राविजयः सर्वदा शान्तिर्निश्चलत्वं विषयेन्द्रियनिग्रहश्चैते यमाः ।।१।।

गुरुभक्तिः सत्यमार्गानुरक्तिः सुखागतवस्त्वनुभवश्च तदवस्त्वनुभवेन तुष्टिर्निःसङ्गता एकान्तवासो मनोनिवृत्तिः फलानभिलाषो वैराग्यभावश्च नियमाः ।।२।।

सुखासनवृत्तिश्चीरवासाश्चैवमासननियमो भवति ।।३।।
पूरककुम्भकरेचकैः षोडशचतुःषष्टिद्वात्रिंशत्संख्यया यथाक्रमं प्राणायामः ।।४।।
विषयेभ्य इन्द्रियार्थेभ्यो मनोनिरोधनं प्रत्याहारः।।५।।
विषयव्यावर्तनपूर्वकं चैतन्ये चेतःस्थापनं धारणं भवति ।।६।।
सर्वशरीरेषु चैतन्यैकतानता ध्यानम् ।।७।।
ध्यानविस्मृतिः समाधिः ।।८।।
एवं सूक्ष्माङ्गानि । य एवं वेद स मुक्तिभाग्भवति ।

[म०ब्रा० उ० १/१]

देहेन्द्रियेषु वैराग्यं यम इत्युच्यते बुधैः ।
अनुरक्तिः परे तत्त्वे सततं नियमः स्मृतः ।।१।।
सर्ववस्तुन्युदासीनभावमासनमुत्तमम् ।
जगत्सर्वमिदं मिथ्याप्रतीतिः प्राणसंयमः ।।२।।
चित्तस्यान्तर्मुखीभावः प्रत्याहारस्तु सत्तम ।
चित्तस्य निश्चलीभावो धारणा धारणं विदुः ।।३।।
सोऽहं चिन्मात्रमेवेति चिन्तनं ध्यानमुच्यते ।
ध्यानस्य विस्मृतिः सम्यक्समाधिरभिधीयते ।।४।।

[त्रि०ब्रा० उ० २८-३२]

## श्रवणप्रशंसा

यस्य नास्ति स्वयं प्रज्ञा शास्त्रं तस्य करोति किम् ।
रागो लिङ्गमबोधस्य चित्तव्यायामभूमिषु ।।१।।
कुतः शाद्वलता तस्य यस्याग्निः कोटरे तरोः ।
रागाक्रान्ते कुतः स्वान्ते ब्रह्मविद्यालवाङ्कुरः ।।२।।
काम एव मनुष्याणां पिधानं ब्रह्मबोधने ।
तस्मात्कामं त्यजन्धीरो ज्ञानमाप्नोति मोक्षदम् ।।३।।
ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः ।
यथाऽऽदर्शतलप्रख्ये पश्यत्यात्मानमात्मनि ।।४।।
दद्यान्नावसरं किंचित्कामादीनां मनागपि ।
आसुप्तेरामृतेः कालं नयेद्वेदान्तचिन्तया ।।५।।

ब्राह्मण्याद्यात्मके देहेऽनात्मन्यात्मेतिभावना ।
श्रुतेः · किंकरतामेति वाङ्मनःकायकर्मसु ।।६।।
दग्ध्वाऽखिलाधिकारश्चेद्ब्रह्मज्ञानाग्निना मुनिः ।
वर्तमानः श्रुतेर्मूर्ध्नि नैष स्याद्विधिकिंकरः।।७।।
द्वैतभावो हि दुःखाय सुखायाद्वैतभावना ।
भारायान्नं पृथग्भूतं भुक्तमन्नं सुखावहम् ।।८।।
तेनाधीतं श्रुतं तेन तेन सर्वमनुष्ठितम् ।
येनाऽऽशां पृष्ठतः कृत्वा वैराग्यमवलम्बितम् ।।९।।
किं तीर्थैः कि प्रदानैर्वा किं यज्ञैः किमुपोषितैः ।
अहन्यहनि तं देवं तन्मयत्वेन शृण्वताम् ।।१०।।
अत्रात्मव्यतिरेकेण द्वितीयं यदि पश्यति ।
तत्र शास्त्राण्यधीयन्ते श्रूयन्ते ग्रन्थविस्तराः ।।११।।
श्रवणान्मननाच्चैव निदिध्यासनतस्तथा ।
आराध्यं सर्वदा ब्रह्म पुरुषेण हितैषिणा ।।१२।।
यथा खनन्खनित्रेण नरो वार्यधिगच्छति ।
तथा गुरुगतां विद्यां शुश्रूषुरधिगच्छति ।।१३।।
गुरुपूजा च सततं वृद्धानां पर्युपासनम् ।
श्रवणं चैव शास्त्राणां कूटस्थं श्रेय उच्यते ।।१४।।
आध्यात्मिकीं कथां मुक्त्वा भैक्षचर्यां सुरस्तुतिम् ।
अनुग्रहं पथि प्रश्नं वृथाजल्पोऽन्य उच्यते ।।१५।।
ब्रह्मचर्यममानित्वमहिंसा सत्यमार्जवम् ।
वेदान्तश्रवणं ध्यानं भिक्षोः कर्माणि नित्यशः ।।१६।।
त्वंपदार्थविवेकाय संन्यासः सर्वकर्मणाम् ।
श्रुत्या विधीयते यस्मात्तत्त्यागी पतितो भवेत् ।।१७।।
शिखासूत्रपरित्यागी वेदान्तश्रवणं विना ।
विद्यमानेऽपि संन्यासे पतत्येव न संशयः ।।१८।।
अहं ब्रह्मेति वाक्यार्थबोधो यावद्दृढो भवेत् ।
शमादिसहितस्तावदभ्यसेच्छ्रवणादिकम् ।।१९।।
त्यक्ताशेषक्रियस्यैव संसारं प्रजिहासतः ।
जिज्ञासोरेव चैकात्म्यं त्रय्यन्तेष्वधिकारिता ।।२०।।

योगाभ्यासपरो नित्यमात्मविद्यापरायणः ।
स ह्याश्रमैर्विजिज्ञास्यः समस्तैरेवमेव तु ।
द्रष्टव्यस्त्वथ मन्तव्यः श्रोतव्यश्च द्विजातिभिः ।।२१।।
यावदेवाऽऽत्मविज्ञानमेतदाभासवर्जितम् ।
सुनिश्चितं भवेत्तावच्छ्रवणादिव्रतो भवेत् ।।२२।।
श्रवणादिक्रिया तावत्कर्तव्येह प्रयत्नतः ।
यावद्यथोक्तविज्ञानमाविर्भवति भास्वरम् ।।२३।।
तच्चिन्तनं तत्कथनमन्योन्यं तत्प्रबोधनम् ।
एतदेकपरत्वं च ब्रह्माभ्यासं विदुर्बुधाः ।।२४।।
अत्यन्ताभावसम्पत्तौ ज्ञातृज्ञेयस्य वस्तुनः ।
युक्त्या शास्त्रैर्यतन्ते ये ते ब्रह्माभ्यासिनः स्थिताः ।।२५।।
सर्गादावेव नोत्पन्नं दृश्यं नास्त्येव तत्सदा ।
इदं जगदहं चेति बोधाभ्यास उदाहृतः ।।२६।।
दृश्यासंभवबोधेन रागद्वेषादितानवे ।
रतिर्बलोदिता याऽसौ ब्रह्माभ्यास उदाहृतः ।।२७।।
दृश्यासंभवबोधे हि ज्ञानं ज्ञेयं च कथ्यते ।
तदभ्यासेन निर्वाणमित्यभ्यासो महोदयः ।।२८।।

## ध्यानप्रशंसा

असंयतः कुबुद्धीनामात्मा बन्धाय कल्पते ।
धीमद्भिः संयतः सोपि पदं दद्यादनामयम् ।।१।।
श्रुतिस्मृतिपुराणञ्च विद्योपनिषदस्तथा ।
श्लोकाः सूत्राणि भाष्याणि यच्चान्यद्वाङ्मयं क्वचित् ।।२।।
वेदानुवचनं ज्ञात्वा ब्रह्मचर्यं तपो दमः ।
श्रद्धोपवासः स्वातन्त्र्यमात्मनो ज्ञानहेतवः ।।३।।
स हि सर्वैर्विजिज्ञास्य आत्मैवाऽऽश्रमवर्तिभिः ।
श्रोतव्यस्त्वथ मन्तव्यो द्रष्टव्यश्च प्रयत्नतः ।।४।।
आत्मज्ञानेन मुक्तिः स्यात्तच्च योगादृते न हि ।
स च योगश्चिरं कालमभ्यासादेव सिद्ध्यति ।।५।।

[स्क० पु० का० ख० ४१/३८-४२]

भयं क्रोधमथालस्यमतिस्वप्नप्रजागरम् ।
अत्याहारमनाहारं नित्यं योगी विवर्जयेत् ।।६।।

[अ०ना०उ० २८]

युक्ताहारविहारश्च युक्तचेष्टो हि कर्मसु ।
युक्तनिद्रावबोधश्च योगी तत्त्वं प्रपश्यति ।।७।।
न दण्डैर्न च मौनेन शून्यागाराश्रयेण च ।
यतिः सिद्धिमवाप्नोति योगेनाप्नोत्यनुत्तमाम् ।।८।।
नारण्यसेवनाद्योगो नानेकग्रन्थचिन्तनात् ।
व्रतैर्यज्ञैस्तपोभिर्वा न योगः कस्यचिद्भवेत् ।।९।।
न च पद्मासनाद्योगो न नासाग्रनिरीक्षणात् ।
न च शास्त्रातिरिक्तेन शौचेन भवति क्वचित् ।।१०।।
न मौनमन्त्रकुहकैरनेकैः सुकृतैस्तथा ।
लोकयात्राभियुक्तस्य न योगः कस्यचिद्भवेत् ।।११।।
अभियोगात्तथाऽभ्यासात्तस्मिन्नेव सुनिश्चयात् ।
पुनः पुनश्च निर्वेदाद्योगः सिध्यति नान्यथा ।।१२।।
यश्चात्ममिथुनो नित्यमात्मक्रीडस्तथैव च ।
आत्मानन्दश्च सततमात्मन्येव समाहितः ।।१३।।
अस्मिन्नेव सुतृप्तश्च सन्तुष्टो नान्यमानसः ।
आत्मन्येव सुतृप्तस्य योगो भवति नान्यथा ।।१४।।
स्वप्नेऽपि योऽभियुक्तश्च जाग्रच्चैव विशेषतः ।
ईदृक्चेष्टः स्मृतः श्रेष्ठो वरिष्ठो ब्रह्मवादिनाम् ।।१५।।

[दक्ष० ९/४-१०]

अनात्मव्यतिरेकेण द्वितीयं यो न पश्यति ।
आत्मारामः स योगीन्द्रो ब्रह्मीभूतो भवेदिह ।।१६।।

[स्क० पु० का० ख० ४१/४७]

वृत्तिहीनं मनः कृत्वा क्षेत्रज्ञं परमात्मनि ।
एकीकृत्य विमुच्येत योगोऽयं मुख्य उच्यते ।।१७।। [दक्षः ७/१५]
सर्वभावविनिर्मुक्तं क्षेत्रज्ञं ब्रह्मणि न्यसेत् ।
एतज्ज्ञानं च ध्यानं च शेषोऽन्यो ग्रन्थविस्तरः ।।१८।।

[दक्ष० ७/२१]

स्वसंवेद्यं हि तद्ब्रह्म कुमारीस्त्रीसुखं यथा ।
अयोगी नैव जानाति जात्यन्धो हि यथा घटम् ।।१९।।
नित्याभ्यसनशीलस्य स्वसंवेद्यं हि तद्भवेत् ।
तत्सूक्ष्मत्वादनिर्देश्यं परं ब्रह्म सनातनम् ।।२०।।

[दक्ष० ७/२४-२५]

आत्मानं चिन्तयेद्देवं नारायणमनामयम् ।
निर्द्वन्द्वं निर्ममं शान्तं मायातीतममत्सरम् ।।२१।।
अव्ययं परिपूर्णं च सदानंदैकविग्रहम् ।
ज्ञानस्वरूपममलं परंज्योतिः सनातनम् ।।२२।।
अविकारमनाद्यन्तं जगच्चैतन्यकारणम् ।
निर्गुणं परमं ध्यायेदात्मानं परतः परम् ।।२३।।

[वृ० ना० पु० २७/१००-१०२]

नारायणं सदा ध्यायेन्निराकारं निरञ्जनम् ।
अहं ब्रह्म विजानीयात्तेन मुच्येत बन्धनात् ।।२४।।
जाग्रत्स्वप्नसुषुप्त्यादिप्रपञ्चं यत्प्रकाशते ।
तद्ब्रह्माहमिति ज्ञात्वा सर्वबन्धैः प्रमुच्यते ।।२५।।
योऽयं स्थाणुः पुमानेष पुंधिया स्थाणुधीरिव ।
ब्रह्मास्मीति धियाऽशेषा ह्यहंबुद्धिर्निवर्तते ।।२६।।
सर्वमेव चिदाकाशं ब्रह्मेति घननिश्चये ।
स्थितं याते शमं याति जीवो निःस्नेहदीपवत् ।।२७।।
समस्तमेव ब्रह्मेति भाविते ब्रह्म वै पुमान् ।
पीतेऽमृतेऽमृतमयः को नाम न भवेदिह ।।२८।।
आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः ।
इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा ।।२९।।
एतज्ज्ञानं परं प्रोक्तं योगश्चैव परः स्मृतः ।
सदा नारायणध्यानं सर्वशास्त्रप्रयोजनम् ।।३०।।
इन्द्रियाणीन्द्रियार्थेभ्यः प्रत्याहृत्य मनश्चलम् ।
प्रत्यगात्मनि संस्थाप्य ध्यानं कुर्याद्यतिः सदा ।।३१।।

त्यक्तसङ्गो जितक्रोधो लघ्वाहारो जितेन्द्रियः ।
पिधाय बुद्ध्या द्वाराणि मनो ध्याने निवेशयेत् ।।३२।।
शून्येष्वेवावकाशेषु गुहासु च वनेषु च ।
नित्ययुक्तः सदा योगी ध्यानं सम्यगुपक्रमेत् ।।३३।।

[मा०पु० ४१/२०-२१]

ध्यानात्पापानि नश्यन्ति ध्यानान्मोक्षं च विन्दति ।
ध्यानात्प्रसीदति हरिर्ध्यानं सर्वार्थसाधनम् ।।३४।।
ध्यानेन सदृशं नास्ति शोधनं पापकर्मणाम् ।
श्वपाकेष्वपि भुञ्जानो ध्यानेनेह विशुध्यति ।।३५।।
ध्यानमेव परं ब्रह्म ध्यानमेव परं तपः ।
ध्यानमेव परं शौचं ध्यानमेव परं पदम् ।।३६।।
सर्वपापप्रसक्तोऽपि ध्यायन्नेव प्रमुच्यते ।
तपस्वी च भवेदेवं पंक्तिपावनपावकः ।।३७।।

[अत्रि० ८/१३-१५]

प्रायश्चित्तेषु सर्वेषु यतेर्ध्यानं विशिष्यते ।
प्रणवस्य जपो वाऽथ मूलमन्त्रश्च संस्मृतः ।।३८।।
जपाज्ज्ञानात्तथा ध्यानान्नान्यद्भिक्षोस्तु साधनम् ।
तस्मात्तानि सदा कुर्याद्यतिः शुद्ध्यर्थमात्मनः ।।३९।।
यदि शैलसमं पापं विस्तीर्णं बहुयोजनम् ।
भिद्यते ध्यानयोगेन नान्यो भेदः कदाचन ।।४०।।

[ब्र० बि० उ० १]

ब्रह्महत्यासहस्राणि भ्रूणहत्याशतानि च ।
एको हि ध्यानयोगस्य दहत्यग्निरिवेन्धनम् ।।४१।। [उ०गी०]
ब्रह्महत्यासहस्राणि अगम्यागमनानि च ।
एकेन ध्यानयोगेन नश्यन्त्यन्यानि तत्क्षणात् ।।४२।।
अश्वमेधसहस्राणि वाजपेयशतानि च ।
एकस्य ध्यानयोगस्य कलां नार्हन्ति षोडशीम् ।।४३।।

[म०उ०उ० १]

तपेद्वर्षसहस्राणि एकपादस्थितो नरः ।
एकस्य ध्यानयोगस्य कलां नार्हन्ति षोडशीम् ।।४४।।

[पै० उ० ४/१५][अ०गी०]

निवातदीपसदृशमकृत्रिममणिप्रभम् ।
ध्यायतो योगिनस्तस्य मुक्तिः करतले स्थिता ।।४५।।
विश्वरूपस्य देवस्य रूपं यत्किंचिदेव हि ।
स्थवीयः सूक्ष्ममन्यद्वा पश्यन्हृदयपङ्कजे ।
ध्यायतो योगिनो यस्तु साक्षादेव प्रकाशते ।।४६।।

[त्रि० ब्रा० उ० १५७-१५८/१/२]

यस्तिष्ठेदेकपादेन वायुभक्षं शतं समाः ।
ध्यानयोगी परस्तस्मादिति ब्रह्मानुशासनम् ।।४७।।

[वायु० पु० ७१/७३]

उत्पन्नवैराग्यबलेन योगी ध्यायेत्परं ब्रह्म सदा क्रियावान् ।
सत्यं सुखं रूपमनन्तमाद्यं विहाय देहं पदमेति विष्णोः ।।४८।।

[हारीत०७/२१]

"प्रियेषु स्वेषु सुकृतमप्रियेषु च दुष्कृतम् ।
विसृज्य ध्यानयोगेन ब्रह्माप्येति सनातनम् ।।४९।।
अनेन विधिना सर्वांस्त्यक्त्वा सङ्गाञ्शनैः शनैः ।
सर्वद्वन्द्वैर्विनिर्मुक्तो ब्रह्मण्येवावतिष्ठते ।।५०।।

[ना०प०उ० ३/५१-५२]

"ध्यानयज्ञस्य माहात्म्यं कल्पानां कोटिकोटिभिः ।
मया मत्तोऽधिकैरन्यैरपि वक्तुं न शक्यते ।।५१।।
ध्यानयज्ञं विना मुक्तौ यतन्ते मोहिता जनाः ।
पायसान्नं परित्यज्य भक्षयन्ति महाविषम् ।।५२।।
ध्यानयज्ञं विना किंचित्कुर्वाणो मुक्तिसिद्धये ।
अक्ष्णाऽपि शब्दं गृह्णाति विना श्रोत्रेण केवलम् ।।५३।।
अश्वमेधादयो यज्ञा अशेषाः वेददर्शिताः ।
मुनीन्द्रा ध्यानयज्ञस्य कलां नार्हन्ति षोडशीम् ।।५४।।
ध्यानयज्ञपरो मर्त्यः शिव एव न चापरः ।
ध्यानयज्ञैकनिष्ठस्य न किंचिदपि दुर्लभम् ।।५५।।

ध्यानयज्ञपराणां तु प्रसादं कुरुते शिवः ।
शिवोऽपि साक्षात्सर्वज्ञः संसारविनिवर्तकः ।।५६।।
बहुनोक्तेन किं सर्वसमासेन मयोदितम् ।
कुरुध्वं वेदविन्मुख्या ध्यानयज्ञमशङ्किताः ।।५७।।

[सू० सं० ४/१/९/४-५२]

## ज्ञानयोगाङ्गानि

यमो हि नियमस्त्यागो मौनं देशश्च कालतः ।
आसनं मूलबन्धश्च देहसाम्यं च दृक्स्थितिः ।।१।।
प्राणसंयमनं चैव प्रत्याहारश्च धारणा ।
आत्मध्यानं समाधिश्च प्रोक्तान्यङ्गानि वै क्रमात् ।।२।।
सर्वं ब्रह्मेति विज्ञानादिन्द्रियग्रामसंयमः ।
यमोऽयमिति सम्प्रोक्तोऽभ्यसनीयो मुहुर्मुहुः ।।३।।
सजातीयप्रवाहश्च विजातीयतिरस्कृतिः ।
नियमो हि परानन्दो नियमात्क्रियते बुधैः ।।४।।
त्यागः प्रपञ्चरूपस्य चिदात्मत्वावलोकनात् ।
त्यागो हि महतां पूज्यः सद्यो मोक्षप्रदायकः ।।५।।
यतो वाचो निवर्तन्ते अप्राप्य मनसा सह ।
यन्मौनं योगिभिर्गम्यं तद्भजेत्सर्वदा बुधः ।।६।।
यतो वाचो निवर्तन्ते तद्वक्तुं केन शक्यते ।
प्रपञ्चो यदि वक्तव्यः सोऽपि शब्दविवर्जितः ।।७।।
इति वा तद्भवेन्मौनं सर्वं सहजसंज्ञितम् ।
गिरा मौनं तु बालानामयुक्तं ब्रह्मवादिनाम् ।।८।।
आदावन्ते च मध्ये च जनो यस्मिन्न विद्यते ।
येनेदं सततं व्याप्तं स देशो विजनः स्मृतः ।।९।।
कल्पना सर्वभूतानां ब्रह्मादीनां निमेषतः ।
कालशब्देन निर्दिष्टं ह्यखण्डानन्दमद्वयम् ।।१०।।
सुखेनैव भवेद्यस्मिन्नजस्रं ब्रह्मचिन्तनम् ।
आसनं तद्विजानीयादन्यत्सुखविनाशनम् ।।११।।

सिद्धये सर्वभूतादि विश्वाधिष्ठानमद्वयम् ।
यस्मिन्सिद्धिं गताः सिद्धास्तत्सिद्धासनमुच्यते ।।१२।।
यन्मूलं सर्वलोकानां यन्मूलं चित्तबन्धनम् ।
मूलबन्धः सदा सेव्यो योग्योऽसौ ब्रह्मवादिनाम् ।।१३।।
अङ्गानां समतां विद्यात्समे ब्रह्मणि लीयते ।
नो चेन्नैव समानत्वमृजुत्वं शुष्कवृक्षवत् ।।१४।।
दृष्टिं ज्ञानमयीं कृत्वा पश्येद्ब्रह्ममयं जगत् ।
सा दृष्टिः परमोदारा न नासाग्रावलोकिनी ।।१५।।
द्रष्टृदर्शनदृश्यानां विरामो यत्र वा भवेत् ।
दृष्टिस्तत्रैव कर्तव्या न नासाग्रावलोकिनी ।।१६।।
चित्तादिसर्वभावेषु ब्रह्मत्वेनैव भावनात् ।
निरोधः सर्ववृत्तीनां प्राणायामः स उच्यते ।।१७।।
निषेधनं प्रपञ्चस्य रेचकाख्यः समीरितः ।
ब्रह्मैवास्मीति या वृत्तिः पूरको वायुरुच्यते ।।१८।।
ततस्तद्वृत्तिनैश्चल्यं कुम्भकः प्राणसंयमः ।
अयं चापि प्रबुद्धानामज्ञानां घ्राणपीडनम् ।।१९।।
विषयेष्वात्मतां दृष्ट्वा मनसश्चित्तरञ्जकम् ।
प्रत्याहारः स विज्ञेयोऽभ्यसनीयो मुहुर्मुहुः ।।२०।।
यत्र यत्र मनो याति ब्रह्मणस्तत्र दर्शनात् ।
मनसा धारणं चैव धारणा सा परा मता ।।२१।।
ब्रह्मैवास्मीति सद्वृत्त्या निरालम्बतया स्थितिः ।
ध्यानशब्देन विख्यातः परमानन्ददायकः ।।२२।।
निर्विकारतया वृत्त्या ब्रह्माकारतया पुनः ।
वृत्तिविस्मरणं सम्यक्समाधिरभिधीयते ।।२३।।
इमं चाकृत्रिमानन्दं तावत्साधुः समभ्यसेत् ।
लक्ष्यो यावत्क्षणात्पुंसः प्रत्यक्त्वं संभवेत्स्वयम् ।।२४।।
ततः साधननिर्मुक्तः सिद्धो भवति योगिराट् ।
तत्स्वरूपं भवेत्तस्य विषयो मनसो गिराम् ।।२५।।
समाधौ क्रियमाणे तु विघ्नान्यायान्ति वै बलात् ।
अनुसंधानराहित्यमालस्यं भोगलालसम् ।।२६।।

लयस्तमश्च विक्षेपस्तेजः स्वेदश्च शून्यता ।
एवं हि विघ्नबाहुल्यं त्याज्यं ब्रह्मविशारदैः ।।२७।।
भाववृत्त्या हि भावत्वं शून्यवृत्त्या हि शून्यता ।
ब्रह्मवृत्त्या हि पूर्णत्वं तथा पूर्णत्वमभ्यसेत् ।।२८।।
ये हि वृत्तिं विहायैनां ब्रह्माख्यां पावनीं पराम् ।
वृथैव ते तु जीवन्ति पशुभिश्च समा नराः ।।२९।।
ये तु वृत्तिं विजानन्ति ज्ञात्वा वै वर्धयन्ति ये ।
ते वै सत्पुरुषा धन्या वन्द्यास्ते भुवनत्रये ।।३०।।
येषां वृत्तिः समा वृद्धा परिपक्वा च सा पुनः ।
ते वै सद्ब्रह्मतां प्राप्ता नेतरे शब्दवादिनः ।।३१।।
कुशला ब्रह्मवार्तायां वृत्तिहीनाः सुरागिणः ।
तेऽप्यज्ञानतया नूनं पुनरायान्ति यान्ति च ।।३२।।
निमिषार्धं न तिष्ठन्ति वृत्तिं ब्रह्ममयीं विना ।
यथा तिष्ठन्ति ब्रह्माद्याः सनकाद्याः शुकादयः ।।३३।।
कारणं यस्य वै कार्यं कारणं तस्य जायते ।
कारणं तत्त्वतो नश्येत्कार्यभाने विचारतः ।।३४।।
अथ शुद्धं भवेद्वस्तु यद्वै वाचामगोचरम् ।
उदेति शुद्धचित्तानां वृत्तिज्ञानं ततः परम् ।।३५।।
भावितं तीव्रवेगेन यद्वस्तु निश्चयात्मकम् ।
दृश्यं ह्यदृश्यतां नीत्वा ब्रह्माकारेण चिन्तयेत् ।
विद्वान्नित्यं सुखे तिष्ठेद्धिया चिद्रसपूर्णया ।।३६।।

[ते० बि० उ० १/१५-५०]

*

# स्वरूपानुसंधानम्

**"प्रत्यग्ब्रह्मैक्यभावना"**

जगत्तावदिदं नाहं सवृक्षतृणपर्वतम् ।
यद्बाह्यं जडमत्यन्तं तत्स्यां कथमहं विभुः ।।१।।
कालेनाल्पेन विलयी देहो नाहमचेतनः ।
जडया कर्णशष्कुल्या कल्पमानक्षणस्थया ।।२।।
शून्याकृतिः शून्यभवः शब्दो नाहमचेतनः ।
त्वचा क्षणविनाशिन्या प्राप्योऽप्राप्योऽयमन्यथा ।।३।।
चित्प्रसादोपलब्धात्मा स्पर्शो नाहमचेतनः ।
लब्धात्मा जिह्वया तुच्छो लोलया लोलसत्तया ।।४।।
स्वल्पस्यन्दो द्रव्यनिष्ठो रसो नाहमचेतनः ।
दृश्यदर्शनयोर्लीनं क्षयिक्षणविनाशिनोः ।।५।।
केवले द्रष्टरि क्षीणं रूपं नाहमचेतनम् ।
नासया गन्धजडया क्षयिण्या परिकल्पितः ।।६।।
पेलवो नियताकारो गन्धो नाहमचेतनः ।
निर्ममोऽमननः शान्तो गतपञ्चेन्द्रियभ्रमः ।।७।।
शुद्धचेतन एवाहं कलाकलनवर्जितः ।
चैत्यवर्जितचिन्मात्रमहमेषोऽवभासकः ।।८।।
सबाह्याभ्यन्तरव्यापी निष्कलोऽहं निरञ्जनः।
निर्विकल्पचिदाभास एक आत्माऽस्मि सर्वगः ।।९।।
मयैव चेतनेनेमे सर्वे घटपटादयः ।
सूर्यान्ता अवभास्यन्ते दीपेनैवात्मतेजसा ।।१०।।
मयैवैताः स्फुरन्तीह विचित्रेन्द्रियवृत्तयः ।
तेजसाऽन्तःप्रकाशेन यथाऽग्निकणपङ्क्तयः।।११।।
अनन्तानन्दसंभोगा परोपशमशालिनी ।
शुद्धेयं चिन्मयी दृष्टिर्जयत्यखिलदृष्टिषु ।।१२।।
सर्वभावान्तरस्थाय चैत्यमुक्तचिदात्मने ।
प्रत्यक्चैतन्यरूपाय मह्यमेव नमो नमः ।।१३।।

[सं० उ० २/१३-२५]

# यतेः स्वानुभवप्रकटनम्

आत्मनेऽस्तु नमो मह्यमविच्छिन्नचिदात्मने ।
परामृष्टोऽस्मि लब्धोऽस्मि प्रोदितोऽस्म्यचिरादहम् ।
उद्धृतोऽस्मि विकल्पेभ्यो योऽस्मि सोऽस्मि नमोऽस्तु मे ।।१।।
तुभ्यं मह्यमनन्ताय मह्यं तुभ्यं चिदात्मने ।
नमस्तुभ्यं परेशाय नमो मह्यं शिवाय च ।।२।।
तिष्ठन्नपि हि नासीनो गच्छन्नपि न गच्छति ।
शान्तोऽपि व्यवहारस्थः कुर्वन्नपि न लिप्यते ।।३।।
सुलभश्चायमत्यन्तं सुज्ञेयश्चाप्तबन्धुवत् ।
शरीरपद्मकुहरे सर्वेषामेव षट्पदः ।।४।।
न मे भोगस्थितौ वाञ्छा न मे भोगविसर्जने ।
यदायाति तदायातु यत्प्रयाति प्रयातु तत् ।।५।।
मनसा मनसि च्छिन्ने निरहंकारतां गते ।
भावेन गलिते भावे स्वस्थस्तिष्ठामि केवलः ।।६।।
निर्भावं निरहंकारं निर्मनस्कमनीहितम् ।
केवलास्पन्दशुद्धात्मन्येव तिष्ठति मे रिपुः ।।७।।
तृष्णारज्जुगणं छित्त्वा मच्छरीरकपञ्जरात् ।
न जाने क्व गतोड्डीय निरहंकारपक्षिणी ।।८।।
यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते ।
यः समः सर्वभूतेषु जीवितं तस्य शोभते ।।९।।
योऽन्तः शीतलया बुद्ध्या रागद्वेषविमुक्तया ।
साक्षिवत्पश्यतीदं हि जीवितं तस्य शोभते ।।१०।।
येन सम्यक्परिज्ञाय हेयोपादेयमुज्झता ।
चित्तस्यान्तेऽर्पितं चित्तं जीवितं तस्य शोभते ।।११।।
ग्राह्यग्राहकसम्बन्धे क्षीणे शान्तिरुदेत्यलम् ।
स्थितिमभ्यागता शान्तिर्मोक्षनामाभिधीयते ।।१२।।
भ्रष्टबीजोपमा भूयो जन्माङ्कुरविवर्जिता ।
हृदि जीवद्विमुक्तानां शुद्धा भवति वासना ।।१३।।

पावनी परमोदारा शुद्धसत्त्वानुपातिनी ।
आत्मध्यानमयी नित्या सुषुप्तिस्थेव तिष्ठति ।।१४।।
चेतनं चित्तरिक्तं हि प्रत्यक्चेतनमुच्यते ।
निर्मनस्कस्वभावत्वान्न तत्र कलनामलम् ।।१५।।
सा सत्यता सा शिवता साऽवस्था पारमात्मिकी ।
सर्वज्ञता सा संतृप्तिर्न तु यत्र मनः क्षतम् ।।१६।।
प्रलपन्विसृजन्गृह्णन्नुन्मिषन्निमिषन्नपि ।
निरस्तमनननानन्दः संविन्मात्रपरोऽस्म्यहम् ।।१७।।
मलं संवेद्यमुत्सृज्य मनो निर्मूलयन्परम् ।
आशापाशानलं छित्त्वा संविन्मात्रपरोऽस्म्यहम् ।।१८।।
अशुभाशुभसंकल्पः संशान्तोऽस्मि निरामयः ।
नष्टेष्टानिष्टकलनः संविन्मात्रपरोऽस्म्यहम् ।।१९।।
आत्मतापरते त्यक्त्वा निर्विभागो जगत्स्थितौ ।
वज्रस्तम्भवदात्मानमवलम्ब्य स्थिरोऽस्म्यहम् ।।२०।।
निर्मलायां निराशायां स्वसंवित्तौ स्थितोऽस्म्यहम् ।
ईहितानीहितैर्मुक्तो हेयोपादेयवर्जितः ।।२१।।
कदाऽन्तस्तोषमेष्यामि स्वप्रकाशपदे स्थितः ।
कदोपशान्तमननो धरणीधरकन्दरे ।।२२।।
समेष्यामि शिलासाम्यं निर्विकल्पसमाधिना ।
निरंशध्यानविश्रान्तिमूकस्य मम मस्तके ।।२३।।
कदा तार्णं करिष्यन्ति कुलायं वनपुत्रिकाः ।
संकल्पपादपं तृष्णालतं छित्त्वा मनोवनम् ।।२४।।
विततां भुवमासाद्य विहरामि यथासुखम् ।
पदं तदनु यातोऽस्मि केवलोऽस्मि जपास्म्यहम् ।।२५।।
निर्वाणोऽस्मि निरीहोऽस्मि निरंशोऽस्मि निरीप्सितः ।
स्वच्छतोर्जितता सत्ता हृद्यता सत्यता ज्ञता ।।२६।।
आनन्दितोपशमता सदा प्रमुदितोदिता ।
पूर्णतोदारता सत्या कान्तिसत्ता सदैकता ।।२७।।

[सं० उ० २/३१-५६]

मय्यखण्डसुखाम्भोधौ बहुधा विश्ववीचयः ।
उत्पद्यन्ते विलीयन्ते मायामारुतविभ्रमात् ।।२८।।
न मे देहेन संबन्धो मेघेनेव विहायसः ।
अतः कुतो मे तद्धर्मा जाग्रत्स्वप्नसुषुप्तिषु ।।२९।।

(कु० उ० १४-१५)

न साक्षिणं साक्ष्यधर्माः संस्पृशन्ति विलक्षणम् ।
अविकारमुदासीनं गृहधर्माः प्रदीपवत् ।।३०।।
जले वापि स्थले वापि लुठत्वेष जडात्मकः ।
नाहं विलिप्ये तद्धर्मैर्घटधर्मैर्नभो यथा ।।३१।।
निष्क्रियोऽस्म्यविकारोऽस्मि निष्कलोऽस्मि निराकृतिः ।
निर्विकल्पोऽस्मि नित्योऽस्मि निरालम्बोऽस्मि निर्द्वयः ।।३२।।
सर्वात्मकोऽहं सर्वोऽहं सर्वातीतोऽहमद्वयः ।
केवलाखण्डबोधोऽहं स्वानन्दोऽहं निरन्तरः ।।३३।।
स्वमेव सर्वतः पश्यन्मन्यमानः स्वमद्वयम् ।
स्वानन्दमनुभुञ्जानो निर्विकल्पो भवाम्यहम् ।।३४।।
इत्येवं चिन्तयन्भिक्षुः स्वरूपस्थितिमञ्जसा ।
निर्विकल्पस्वरूपज्ञो निर्विकल्पो बभूव ह ।।३५।।

[उ० २३-२८]

*

# यतेः कृतकृत्यत्वम्

दुःखिनोऽज्ञाः संसरन्तु कामं पुत्राद्यपेक्षया ।
परमानन्दपूर्णोऽहं संसरामि किमिच्छया ।।१।।
अनुतिष्ठन्तु कर्माणि परलोकयियासवः ।
सर्वलोकात्मकः कस्मादनुतिष्ठामि किं कथम् ।।२।।
व्याचक्षतां ते शास्त्राणि वेदानध्यापयन्तु वा ।
येऽत्राधिकारिणो मे तु नाधिकारोऽक्रियत्वतः ।।३।।
निद्राभिक्षे स्नानशौचे नेच्छामि न करोमि च ।
द्रष्टारश्चेत्कल्पयन्तु किं मे स्यादन्यकल्पनात् ।।४।।
गुञ्जापुञ्जादि दह्येत नान्यारोपितवह्निना ।
नान्यारोपितसंसारधर्मान्नैवमहं भजे ।।५।।
शृण्वन्त्वज्ञाततत्त्वास्ते जानन्कस्माच्छृणोम्यहम् ।
मन्यन्तां संशयापन्ना न मन्येऽहमसंशयः ।।६।।
विपर्यस्तो निदिध्यासे किं ध्यानमविपर्यये ।
देहात्मत्वविपर्यासं न कदाचिद्भजाम्यहम् ।।७।।
अहं मनुष्य इत्यादिव्यवहारो विनाप्यमुम् ।
विपर्यासं चिराभ्यस्तवासनातोऽवकल्पते ।।८।।
आरब्धकर्मणि क्षीणे व्यवहारो निवर्तते ।
कर्मक्षये त्वसौ नैव शाम्येद्ध्यानसहस्रतः ।।९।।
विरलत्वं व्यवहृतेरिष्टं चेद्ध्यानमस्तु ते ।
बाधिकर्मव्यवहृतिं पश्यन्ध्यायाम्यहं कुतः ।।१०।।
विक्षेपो वा समाधिर्वा मनसः स्याद्विकारिणः ।
नित्यानुभवरूपस्य को मेऽत्रानुभवः पृथक् ।।११।।
कृतं कृत्यं प्रापणीयं प्राप्तमित्येव नित्यशः ।
व्यवहारो लौकिको वा शास्त्रीयो वाऽन्यथापि वा ।
ममाकर्तुरलेपस्य यथारब्धं प्रवर्तताम् ।।१२।।
अथवा कृतकृत्येऽपि लोकानुग्रहकाम्यया ।
शास्त्रीयेणैव मार्गेण वर्तेऽहं का मम क्षतिः ।।१३।।

देवार्चनस्नानशौचभिक्षादौ वर्ततां वपुः ।
तारं जपतु वाक्तद्वत्पठत्वाम्नायमस्तकम् ।।१४।।
विष्णुं ध्यायतु धीर्यद्वा ब्रह्मानन्दे विलीयताम् ।
साक्ष्यहं किंचिदप्यत्र न कुर्वे नापि कारये ।।१५।।
कृतकृत्यतया तृप्तः प्राप्तप्राप्यतया पुनः ।
तृप्यन्नेवं स्वमनसा मन्यतेऽसौ निरन्तरम् ।।१६।।
धन्योऽहं धन्योऽहं नित्यं स्वात्मानमञ्जसा वेद्मि ।
धन्योऽहं धन्योऽहं ब्रह्मानन्दो विभाति मे स्पष्टम् ।।१७।।
धन्योऽहं धन्योऽहं दुःखं सांसारिकं न वीक्षेऽद्य ।
धन्योऽहं धन्योऽहं स्वस्याज्ञानं पलायितं क्वापि ।।१८।।
धन्योऽहं धन्योऽहं कर्तव्यं मे न विद्यते किंचित् ।
धन्योऽहं धन्योऽहं प्राप्तव्यं सर्वमत्र सम्पन्नम् ।।१९।।
धन्योऽहं धन्योऽहं तृप्तेर्मे कोपमा भवेल्लोके ।
धन्योऽहं धन्योऽहं धन्यो धन्यः पुनः पुनर्धन्यः ।।२०।।
अहो पुण्यमहो पुण्यं फलितं फलितं दृढम् ।
अस्य पुण्यस्य संपत्तेरहो वयमहो वयम् ।।२१।।
अहो ज्ञानमहो ज्ञानमहो सुखमहो सुखम् ।
अहो शास्त्रमहो शास्त्रमहो गुरुरहो गुरुः ।।२२।।

[अव० उ० ११-३३

## ब्रह्मज्ञानफलम्

न कर्मणा न प्रजया न चान्येनापि केनचित् ।
ब्रह्मवेदनमात्रेण ब्रह्माप्नोत्येव मानवः ।।१।।
तद्विद्याविषयं ब्रह्म सत्यज्ञानसुखाद्वयम् ।
संसारे च गुहावाच्ये मायाज्ञानादिसंज्ञके ।।२।।
निहितं ब्रह्म यो वेद परमे व्योम्नि संज्ञिते ।
सोऽश्नुते सकलान्कामान्क्रमेणैव द्विजोत्तमः ।।३।।

प्रत्यगात्मानमज्ञानमायाशक्तेश्च साक्षिणम् ।
एकं ब्रह्माहमस्मीति ब्रह्मैव भवति स्वयम् ।।४।।

[क० रु०उ० ९-१२]

सारमेव रसं लब्ध्वा साक्षाद्देही सनातनम् ।
सुखी भवति सर्वत्र ह्यन्यथा सुखता कुतः ।।५।।
असत्यस्मिन्परानन्दे स्वात्मभूतेऽखिलात्मनाम् ।
को जीवति नरो जन्तुः को वा नित्यं विचेष्टते ।।६।।
तस्मात्सर्वात्मना चित्ते भासमानो ह्यसौ नरः ।
आनन्दयति दुःखाढ्यं जीवात्मानं सदा जनः ।।७।।
यदा ह्येवैष एतस्मिन्नदृश्यत्वादिलक्षणे ।
निर्भेदं परमाद्वैतं विन्दते च महायतिः ।।८।।
तदेवाभयमत्यन्तकल्याणं परमामृतम् ।
सद्रूपं परमं ब्रह्म त्रिपरिच्छेदवर्जितम् ।।९।।
यदा ह्येवैष एतस्मिन्नल्पमप्यन्तरं नरः ।
विजानाति तदा तस्य भयं स्यान्नात्र संशयः ।।१०।।

[क० रू० उ० २३-२८]

तद्ब्रह्मानन्दमद्वन्द्वं निर्गुणं सत्यचिद्घनम् ।
विदित्वा स्वात्मरूपेण न बिभेति कुतश्चन ।।११।।
एवं यस्तु विजानाति स्वगुरोरुपदेशतः ।
स साध्वसाधुकर्मभ्यां सदा न तपति प्रभुः ।।१२।।
ताप्यतापकरूपेण विभातमखिलं जगत् ।
प्रत्यगात्मतया भाति ज्ञानाद्वेदान्तवाक्यजात् ।।१३।।

[क०रू०उ० ३४-३६]

तर्कतश्च प्रमाणाच्च चिदेकत्वव्यवस्थितेः ।
चिदेकत्वपरिज्ञाने न शोचति न मुह्यति ।।१४ ।।

[आभ० उ० ४/३४]

यस्तु सर्वाणि भूतानि स्वात्मन्येवानुपश्यति ।
सर्वभूतेषु चात्मानं ततो न विजुगुप्सते ।।१५।।
यस्मिन्सर्वाणि भूतानि स्वात्मैवाभूद्विजानतः ।
तत्र को मोहः कः शोक एकत्वमनुपश्यतः ।।१६।। [ई०उ० ६-७]

यदा पश्यति चात्मानं केवलं परमार्थतः ।
मायामात्रं जगत्कृत्स्नं तदा भवति निर्वृतः ।।१७।।

[श्रीजा० उ० १०/१२] [कू० पु० २/२/३५-३५१/२]

सर्वभूतस्थमात्मानं भजत्येकत्वमात्मनः ।
सर्वथा वर्तमानोऽपि न च भूयोऽभिजायते ।।१८।।

[यो० वा० ६/१/५३/४४]

यदा ब्रह्मगुणैर्जीवो युक्तस्त्यक्त्वा मनोगुणान् ।
संशान्तकरणग्रामस्तदा स्यात्सर्वगः प्रभुः ।।१९।।

[यो० वा० ६/१/१२८/४५]

केवलात्मा तथा चैव केवलेन समेत्य वै ।
स्वतन्त्रश्च स्वतन्त्रेण स्वतन्त्रत्वमवाप्नुते ।।२०।।

[महा० शा० ३०८/३०]

यदा जन्मजरादुःखव्याधीनामेकभेषजम् ।
केवलं ब्रह्मविज्ञानं जायतेऽसौ तदा शिवः ।।२१।।

[सू० सं० २/२०/२९]

यथा नदीनदालोकसागरेणैकतां ययुः ।
तद्वदात्माक्षरेणासौ निष्कलेनैकतां व्रजेत् ।।२२।। [अह० रा०]

"तरति शोकमात्मवित्" ।।२३।।[छा० ७/१/३]

स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति तरति शोकं
तरति पाप्मानं गुहाग्रन्थिभ्यो विमुक्तोऽमृतो भवति ।।२४।।

[मु० उ० ३/२/९]

स वा एष महानज आत्माऽजरोऽमरोऽमृतोऽभयो
ब्रह्माभयं वै ब्रह्माभयं हि वै ब्रह्म भवति य एवं वेद ।।२५।।

[बृ० उ० ४/४/२५]

"नैनं कृताकृते तपतः ।।२६।।" [बृ० उ० ४/४/२२]

"तं विदित्वा न लिप्यते कर्मणा पापकेन ।।"२७।।

[बृ० उ० ४/४/२३]

"तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम्"।।२८।।

[क० उ० २/२/१२]

"एतद्यो वेद निहितं गुहायां सोऽविद्याग्रन्थिं विकिरतीह सोम्य" ।।२९।।

[मु० उ० २/१/१०]

"आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चनेति" ।।३०।।

[तै० उ० २/९]

"ब्रह्मविदाप्नोति परम् । सत्यं ज्ञानमनन्तं ब्रह्म ।
यो वेद निहितं गुहायां परमे व्योमन् ।
सोऽश्नुते सर्वान्कामान् सह ब्रह्मणा विपश्चितेति ।।"३१।।

[तै० उ० २/१]

"तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम् ।।३२।।

[क० उ० २/२/१३]

"निचाय्य तन्मृत्युमुखात्प्रमुच्यते" ।।३३।।

[क०उ० १/३/१५]

"महान्तं विभुमात्मानं मत्वा धीरो न शोचति" ।।३४।।

[क० उ० १/२/२२]

"तद्ब्रह्माहमिति ज्ञात्वा ब्रह्म संपद्यते ध्रुवम्" ।।३५।।

[ब्र० वि० उ० ८]

"सम्पश्यन्ब्रह्म परमं याति नान्येन हेतुना" ।।३६।।

[कै० उ० १०]

स यो ह वै तत्परमं ब्रह्म यो वेद वै मुनिः।
"ब्रह्मैव भवति स्वस्थः सच्चिदानन्दमातृकः" ।।३७।।

[रू० हृ० उ० ५२]

"लक्ष्यालक्ष्यमतिं त्यक्त्वा यस्तिष्ठेत्केवलात्मना ।
शिव एव स्वयं साक्षादयं ब्रह्मविदुत्तमः" ।।३८।।
"अविशेषेण सर्वं तु यः पश्यति चिदन्वयात् ।
स एव साक्षाद्विज्ञानी स शिवः स हरिर्विधिः" ।।३९।।

[व०उ० २/६३]

"दर्शनादर्शने हित्वा स्वयं केवलरूपतः ।
य आस्ते कपिशार्दूल ब्रह्म स ब्रह्मवित्स्वयम्" ।।४०।।

[मुक्ति उ० २/६३]

"स यो ह वै तत्परमं ब्रह्म वेद सुरर्षभाः ।
ब्रह्मैव भवति ज्ञानान्नास्ति संदेहकारणम्" ।।४१।।

[सू० सं० ४/१/१/७/९२]

सच्चिदानन्दतेजः कूटस्थं परंब्रह्मावलोकयंस्तद्रूपो भवति।।४२।।

[अद्व० उ०२]

"य एवं निर्बीजं वेद निर्बीज एव स भवति" ।।४३।।

[सु उ० ९/१५]

आत्मैवेदं सर्वं निष्कलं यदैव ब्रह्म भावयति ।
मोहाद्गहनाद्वियुक्तस्तदैव पमेश्वरीभूतः ।।४४।।

[परमार्थ० ६४]

"नारायणमात्मानं ज्ञात्वा सर्गस्थितिप्रलयहेतुम् ।
सर्वज्ञः सर्वगतः सर्वः सर्वेश्वरो भवति" ।।४५।।

[परमार्थ०६७]

'यदा बुध्यति आत्मानं तदा भवति केवलः' ।४६।।

[ब्र०पु० २४२/८४]

"तमेवं विद्वानमृत इह भवति" ।।४७।।

[नृ० पू० उ० १/६]

"य एतद्विदुरमृतास्ते भवन्ति" ।।४८।।

[बृ०उ० ४/४/१४]

"स यो ह वै तदच्छायमशरीरमलोहितं शुभ्रमक्षरं वेदयते ।
यस्तु सोम्य स सर्वज्ञः सर्वो भवति" ।।४९।।

[प्र० उ० ४/१०]

"तदक्षरं वेदयते यस्तु सोम्य स सर्वज्ञः सर्वमेवाविवेशेति" ।।५०।।

[पू० उ० ४/११]

"तं वेद्यं पुरुषं वेद यथा मा वो मृत्युः परिव्यथा इति" ।।५१।।

[प्र० उ० ६/६]

"संप्राप्यैनमृषयो ज्ञानतृप्ताः कृतात्मानो वीतरागाः प्रशान्ताः ।
ते सर्वगं सर्वतः प्राप्य धीरा युक्तात्मानः सर्वमेवाविशन्ति" ।।५२।।

[मु० उ० ३/२/३]

"भूतेषु भूतेषु विचित्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति" ।।५३।।

[के० उ० २/५]

"ईशं तं ज्ञात्वाऽमृता भवन्ति" ।।५४।।

[श्वे० उ० ३/७]

"तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय ।।५५।।

[श्वे० उ० ३/८]

'ज्ञात्वा शिवं शान्तिमत्यन्तमेति ।।५६।।

[श्वे० उ० ४/१४]

"तमेवं ज्ञात्वा मृत्युपाशांश्छिनत्ति" ।।५७।।

[श्वे० उ० ४/१५]

"ज्ञात्वा देवं मुच्यते सर्वपाशैः" ।।५८।।

[श्वे० उ० ४/१६]

"य एनमेवं विदुरमृतास्ते भवन्ति" ।।५९।।

[श्वे०उ० ४/२०]

"य एनं विदुरमृतास्ते भवन्ति" ।।६०।।

[त्रि० म० उ० ६/१]

'ब्रह्म संपद्यते योगी न भूयः संसृतिं व्रजेत्' ।।६१।।

[त्रि० ब्रा० उ० १६१]

"निष्कलङ्को निरंजनो निर्विकल्पो निराख्यातः शुद्धो देव एको नारायणो न द्वितीयोऽस्ति कश्चित् । य एवं वेद स विष्णुरेव भवति स विष्णुरेव भवति" ।।६२।। [ना० अथ० उ० २]

"ज्ञात्वा तमेवं मनसा हृदा च भूयो न मृत्युमुपयाति विद्वान् " ।।६३।

[म० ना० उ० २४/१]

"य एवं वेद ब्रह्मणो महिमानमाप्नोति" ।।६४।। [म० ना० उ० २४/२]

"यं ज्ञात्वा मुच्यते बुधः" ।।६५।। [व्र० उ०]

"तमीशानं वरदं देवमीड्यं निचाय्येमां शान्तिमत्यन्तमेति " ।।६६।।

[अ० शिव उ० २४/२]

"तेषां शान्तिर्भवति नेतरेषाम् " ।।६७।। [अ० शि० उ० ५]

"ब्रह्मविदो दोषा नाश्रयन्ति कदाचन"।।६८।। [मैत्रा० उ० ६/१८]

"शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्यति। सर्वस्यात्मा भवति य एवं वेद"।।६९।। [सु० उ० ९]

"मा शोचीरात्मविज्ञानी शोकस्यान्तं गमिष्यति"।।७०।।

[शा० उ० २]

"तस्य विज्ञानमात्रेण नरः पापैः प्रमुच्यते"।।७१।।

[यो० शि० उ० ६/२५]

"यज्ज्ञात्वा परमश्नुते"।।७२।। [ब्रह्म० उ०]

"तमेवं विद्वानमृत इह भवति।
नान्यः पन्था विद्यतेऽयनाय"।।७३।। [त्रि०मा० उ० ४/१]

"जाग्रत्स्वप्नसुषुप्त्यादि प्रपञ्चं यत्प्रकाशते।
तद्ब्रह्माहमिति ज्ञात्वा सर्वबन्धैः प्रमुच्यते।।७४।।

[कै० उ० १७]

"ज्ञानामृतेन तृप्तस्य कृतकृत्यस्य योगिनः नैवास्ति किंचित्कर्तव्यम्"।।७५।।

[शि० ध०]

"ज्ञानेनैतेन विप्रस्य त्यक्तसंगस्य देहिनः कर्तव्यं नास्ति"।।७६।।[लि० पु०]

"ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा।
ज्ञानिनः सर्वकर्माणि जीर्यन्ते नात्र संशयः।
क्रीडन्नपि न लिप्येत कृत्यैर्नानाविधैरपि।।७७।। [लि०पु०]

"ज्ञानासिना तूर्णमशेषं कर्मबन्धनम्"।।७८।। [शि०ध०]

"शुभाशुभं कर्म ज्ञानाग्निर्दहते क्षणात्"।।७९।।[शि० ध०]

"सर्वाणि पापानि जीर्यन्ते ज्ञानिनः क्षणात्"।।८०।। [शि०ध०]

"ज्ञानाग्निः शुभाशुभं दहति"।।८१।। [पि०उ०]

*

# पञ्चमाश्रमम्

चिन्मयं व्यापकं ब्रह्म ह्याकाशं जगदीश्वरः ।
निर्विकल्पं स्वयं ब्रह्म तस्याहं पंचमाश्रमम् ।।१।।
निराकारं निराभासं निरालम्बं निरंजनम् ।
निःशब्दमुच्यते ब्रह्म तस्याहं पंचमाश्रमम् ।।२।।
ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतीश्वरः ।
आश्रमाणां च भिन्नोऽहं तस्याहं पंचमाश्रमम् ।।३।।
आश्रमाणां च सर्वेषामस्ति नास्ति न चात्मनः ।
भिन्नाभिन्नं न पश्यामि तस्याहं पंचमाश्रमम् ।।४।।
आब्रह्मस्तम्बपर्यन्तं सम्पूर्णं परमात्मनः ।
धर्माधर्मौ न जानाति तस्याहं पंचमाश्रमम् ।।५।।
मनःस्थं मनोमध्यस्थं मनोमायाविवर्जितम् ।
मनसा मानवा लोके तस्याहं पंचमाश्रमम् ।।६।।
अगोचरं यदाभिन्नं यस्मिन् सर्वं प्रलीयते ।
निवर्तन्ते क्रियाः सर्वास्तस्याहं पंचमाश्रमम् ।।७।।
निरालम्बं गतं प्राणं यज्ज्योतिश्च लयं गतम् ।
निवर्तन्ते हीन्द्रियाणि तस्याहं पंचमाश्रमम् ।।८।।
स्वयं दीक्षा स्वयं भोक्ता स्वयं देवो महेश्वरः ।
निर्विकल्पं स्वयं ब्रह्म तस्याहं पंचमाश्रमम् ।।९।।
क्वचिद्भोगी क्वचित्त्यागी क्वचिद्याति पिशाचवत् ।
स्वयमात्मा स्वरूपेण तस्याहं पंचमाश्रमम् ।।१०।।
क्षमारूपी जितक्रोधः सत्यवादी दृढव्रतः ।
क्षरभावपरित्यागी तस्याहं पंचमाश्रमम् ।।११।।
देहातीतं मनोऽतीतं देहस्थं देहवर्जितम् ।
देहभावपरित्यागी तस्याहं पंचमाश्रमम् ।।१२।।
यत्र यत्र कृता भिक्षा भोक्ताऽहं सर्वकर्मणि ।
कर्माकर्म न जानाति तस्याहं पंचमाश्रमम् ।।१३।।

लोकलज्जाविनिर्मुक्तश्चोरव्याघ्रभयं न हि।
भयाभयौ न जानाति तस्याहं पंचमाश्रमम् ।।१४।।
सुखदुःखविनिर्मुक्तः शीतोष्णादिभयं न हि ।
लाभालाभौ न जानाति तस्याहं पंचमाश्रमम् ।।१५।।
मित्रादिपक्षनिर्मुक्तो दुष्टादुष्टभयं न हि।
सुखात्मसर्वभूतात्मा तस्याहं पंचमाश्रमम् ।।१६।।
द्वन्द्वव्याधिविनिर्मुक्त आशापाशविवर्जितः ।
लोकशंका भयं नास्ति तस्याहं पंचमाश्रमम् ।।१७।।
ज्ञानविज्ञानसंपन्नो ब्रह्मवेत्ता मुनीश्वरः ।
न तीर्थं नोपवासश्च तस्याहं पंचमाश्रमम् ।।१८।।
मुमुक्षुर्ब्रह्मनिष्ठश्च परनिष्ठः परः शिवः ।
सर्वधर्मपरित्यागी तस्याहं पंचमाश्रमम् ।।१९।।
अध्यात्मविद्यागोप्ताथो वेदान्ताम्बुजभास्करः ।
वेदमार्गपरित्यागी तस्याहं पंचमाश्रमम् ।।२०।।
दण्डकमण्डलुत्यागी कटिसूत्रवरं त्यजेत् ।
जगद्व्यापारभिन्नोऽहं तस्याहं पंचमाश्रमम् ।।२१।।
जीवभावपरित्यागी शिवभावमयो दृढम् ।
स्वर्नरकं न जानाति तस्याहं पंचमाश्रमम् ।।२२।।
विदेहो वीतरागी च षडूर्मितमसो हरः ।
षड्वैरिवृंदविध्वंसस्तस्याहं पंचमाश्रमम् ।।२३।।
स्वयं ब्रह्मा स्वयं शक्तिः स्वयं विष्णुः स्वयं शिवः ।
सर्वेश्वरः सर्वसाक्षी तस्याहं पंचमाश्रमम् ।।२४।।
बालोन्मत्तपिशाचोग्रं शापानुग्रहशंभुवत् ।
राजारंकं समं दृष्ट्वा तस्याहं पंचमाश्रमम् ।।२५।।
वर्णावर्णौ न जानाति दिवारात्री न लक्ष्यते ।
पापं पुण्यं न जानाति तस्याहं पंचमाश्रमम् ।।२६।।
भिक्षा चतुर्षु वर्णेषु मद्यमांसान्नभुञ्जतः ।
भक्ष्याभक्ष्ये न जानाति तस्याहं पंचमाश्रमम् ।।२७।।

सच्चिदानन्दरूपोऽहं शिवोऽहं निर्गुणोऽप्यहम् ।
एवं भावयते नित्यं तस्याहं पंचमाश्रमम् ।।२८।।
पंचभूतप्रभिन्नोऽहं मायादिगुणनाशकः ।
तत्त्ववेत्ता महानात्मा तस्याहं पंचमाश्रमम् ।।२९।।
क्वचिल्लोभी क्वचित् भोगी क्वचित्स्वजनरंजनः ।
लोकालोकौ न जानाति तस्याहं पंचमाश्रमम् ।।३०।।
नारीं नरकवद्दृष्ट्वा सङ्गं च शृंखलोपमम् ।
हेम हालाहलं दृष्ट्वा तस्याहं पंचमाश्रमम् ।।३१।।
एकत्र न कदा वासो भ्रमणं भुवनत्रये ।
नग्नो दिगम्बरो दिव्यस्तस्याहं पंचमाश्रमम् ।।३२।।
कामं क्रोधं च लोभं च मोहादि सकलं त्यजेत् ।
हेमलोष्टं न जानाति तस्याहं पंचमाश्रमम् ।।३३।।
अद्वयश्च अखण्डश्च प्रकाशः परमेश्वरः ।
ब्रह्मा विष्णुः शिवः साक्षात् तस्याहं पंचमाश्रमम् ।।३४।।
औदासीन्यं सुधात्मानं परितृप्तिर्महात्मनः ।
इन्द्रादीन् कीटवद् दृष्ट्वा तस्याहं पंचमाश्रमम् ।।३५।।
अभिन्नात्मा मनोरूपं जगदेतच्चराचरम् ।
निर्विकल्पं स्वयं ब्रह्म तस्याहं पंचमाश्रमम् ।।३६।।
हंसः परमहंसश्च दत्तात्रेयस्वरूपकः ।
गुरोर्गुरुर्जगद्गुरुस्तस्याहं पंचमाश्रमम् ।।३७।।
सर्वाराध्यो महद्भूतः सर्वस्याद्यपरो जनः ।
जीवन्मुक्तो जरातीतस्तस्याहं पंचमाश्रमम् ।।३८।।
शून्यशून्यो महाशून्यः शून्यात्मा शून्यवर्जितः ।
शून्यमण्डलवासी च तस्याहं पंचमाश्रमम् ।।३९।।
अजोऽहमजरोऽहं च सर्वात्मा सर्वदैवतः ।
अनादिब्रह्मरूपोऽहं तस्याहं पंचमाश्रमम् ।।४०।।
एवं किंचित्परं ज्ञानं चिह्नं वै पंचमाश्रमम् ।
लक्षणं हंसमार्गस्य परहंसशिवस्य च ।।४१।।

ब्रह्मचर्यपदं चादौ द्वितीयं गृहस्थाश्रमम् ।
तृतीयं वानप्रस्थं च संन्यासं च चतुर्थकम् ।।४२।।
पंचमं हंसदीक्षा च साक्षाच्छिवस्वरूपकम् ।
वेदमार्गविनिर्मुक्तं कर्माकर्मविवर्जितम् ।।४३।।
चत्वार आश्रमा बद्धा मुक्तोऽहं पंचमाश्रमम् ।
भिन्नोऽहं वेद कर्माणि केवलं ब्रह्मरूपकम् ।।४४।।
माता यस्य पिता धन्यौ धन्यं गोत्रं कुलं तथा ।
कुलकोटिं समुद्धार्य यतीन्द्रः शिवरूपकः ।।४५।।
सहस्रं ब्राह्मणान् भुंजीत् यतिमेकं समं भवेत् ।
यतींश्च नियुतं भुंजीत् हंसमेकं समं खलु ।।४६।।
हंसो यस्य गृहे भुंक्ते गृहे तस्य शिवः स्वयम् ।
यत्र भुंक्ते शिवः साक्षात् तत्र भुंक्ते जगत्त्रयम् ।।४७।।
संन्यासी विष्णुरूपश्च हंसश्च शिवरूपकः ।
दर्शनस्पर्शमात्रेण बद्धो मुक्तो न संशयः ।।४८।।
क्रियाहीनो मतिभ्रष्टो ह्यशक्तः सर्वकर्मणि ।
परदारगमो नित्यं तरति हंसपूजनात् ।।४९।।
हंसो दत्तः शिवः साक्षात् वामदेवः शुकादयः ।
हंस हंसेति हंसेति ह्रंसो नाम सदाशिवः ।।५०।।
सनकाद्याः हंसरूपाः कपिलश्च महामुनिः ।
नारायणः परंब्रह्म हंसरूपं न संशयः ।।५१।।
नास्ति हंसपरो मार्गो नास्ति हंसपरं तपः ।
नास्ति हंसपरा पूजा तस्माद्धंसो भवेद्बुधः ।।५२।।
इति विद्यां पठेन्नित्यं श्रवणं मननं कृतम् ।
निजाभ्यासेन प्राप्नोति साक्षात्कारं न संशयः ।।५३।।

*

# सद्योमुक्तिः क्रममुक्तिश्च

शुको मुक्तो वामदेवोऽपि मुक्तस्ताभ्यां विना मुक्तिभाजो न सन्ति ।
शुकमार्गं येऽनुसरन्ति धीराः सद्योमुक्तास्ते भवन्तीह लोके ।।१।।
वामदेवं येऽनुसरन्ति नित्यं मृत्वा जनित्वा च पुनः पुनस्तत् ।
ते वै लोके क्रममुक्ता भवन्ति योगैः सांख्यैः कर्मभिः सत्त्वयुक्तैः ।।२।।

शुकश्च वामदेवश्च द्वे सृती देवनिर्मिते ।
शुको विहङ्गमः प्रोक्तो वामदेवः पिपीलिका ।।३।।
अतद्व्यावृत्तिरूपेण साक्षाद्विधिमुखेन वा ।
महावाक्यविचारेण सांख्ययोगसमाधिना ।।४।।
विदित्वा स्वात्मनो रूपं संप्रज्ञातसमाधितः ।
शुकमार्गेण विरजाः प्रयान्ति परमं पदम् ।।५।।
यमाद्यासनजायासहठाभ्यासात्पुनः पुनः ।
विघ्नबाहुल्यसंजात अणिमादिवशादिह ।।६।।
अलब्ध्वापि फलं सम्यक्पुनर्भूत्वा महाकुले ।
पुनर्वासनयैवायं योगाभ्यासं पुनश्चरन् ।।७।।
अनेकजन्माभ्यासेन वामदेवेन वै यथा ।
सोऽपि मुक्तिं समाप्नोति तद्विष्णोः परमं पदम् ।।८।।
द्वाविमावपि पन्थानौ ब्रह्मप्राप्तिकरौ शिवौ ।
सद्योमुक्तिप्रदश्चैकः क्रममुक्तिप्रदः परः ।
अत्र को मोहः कः शोक एकत्वमनुपश्यतः ।।९।।
यस्यानुभवपर्यन्ता बुद्धिस्तत्त्वे प्रवर्तते ।
तद्दृष्टिगोचराः सर्वे मुच्यन्ते सर्वपातकैः ।
खेचरा भूचराः सर्वे ब्रह्मविद्दृष्टिगोचराः ।
सद्य एव विमुच्यन्ते कोटिजन्मार्जितैरघैः ।।१०।।

*

# जीवन्मुक्तानां लक्षणम्

"सर्वधर्मान्परित्यज्य निर्ममो निरहंकारो भूत्वा ब्रह्मिष्ठं शरणमुपगम्य तत्त्वमसि अहं ब्रह्मास्मि सर्वं खल्विदं ब्रह्म नेह नानास्ति किंचनेत्यादिमहावाक्यार्थानुभवज्ञानाद्ब्रह्मैवाहमस्मीति निश्चित्य निर्विकल्पसमाधिना स्वतन्त्रो यतिश्चरति स संन्यासी स मुक्तः स पूज्यः स योगी स परमहंसः सोऽवधूतः स ब्राह्मण इति ॥१॥ [निरा० उ० ]

**"कपालं वृक्षमूलानि कुचेलान्यसहायता ।**
**समता चैव सर्वस्मिन्नेतन्मुक्तस्य लक्षणम् ।।२।।**

[ना० प० उ० ३/५४]

**"स्वप्नेऽपि यो हि युक्तः स्याज्जाग्रतीव विशेषतः ।**
**ईदृक्चेष्टः स्मृतः श्रेष्ठो वरिष्ठो ब्रह्मवादिनाम् ।।३।।**

[ना० प० उ० ५/५]

"आत्मैवेदं सर्वं स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नात्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराड् भवति ॥" [छा०उ०७/२५/२]

"ते देवाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च ससाधनेभ्यो व्युत्थाय निरागारा निष्परिग्रहाः अशिखा अयज्ञोपवीता अन्धा बधिरा मुग्धाः क्लीवा मूका उन्मत्ता इव परिवर्तमानाः शान्ता दान्ता उपरतास्तितिक्षवः समाहिता आत्मरतय आत्मक्रीडा आत्ममिथुना आत्मानन्दाः प्रणवमेव परमं ब्रह्मात्म-प्रकाशं शून्यं जानन्तस्तत्रैव परिसमाप्ताः ॥४॥ [नृ०उ०६]

"कुचेलोऽसहाय एकाकी समाधिस्थ आत्मकाम आप्तकामो निष्कामो जीर्णकामो हस्तिनि सिंहे दंशे मशके नकुले सर्पराक्षसगन्धर्वेषु मृत्यो रूपाणि विदित्वा न बिभेति कुतश्चनेति ॥५॥ [सु० उ० १३]

"तुरीयमक्षरमिति ज्ञात्वा जागरिते सुषुप्त्यवस्थापन्न इव यद्यच्छ्रुतं यद्यद्दृष्टं तत्सर्वमविज्ञातमिव यो वसेत्तस्य स्वप्नावस्थायामपि तादृगवस्था भवति स जीवन्मुक्तो भवति ॥"६॥ [जा० प० उ० ५/१]

"आशाम्बरो न नमस्कारो न स्वाहाकारो न स्वधाकारो न विसर्जनकारो निन्दास्तुतिव्यतिरिक्तो न मन्त्रतन्त्रोपासको देवान्तरध्यानशून्यो लक्ष्यालक्ष्यनिवर्तकः सर्वोपरतः स सच्चिदानन्दाद्वयचिद्घनः संपूर्णानन्दैकबोधो

ब्रह्मैवाहमस्मीत्यनवरतं ब्रह्मप्रणवानुसंधानेन यः कृतकृत्यो भवति स परमहंसपरिव्राट् ।।७।। [प०प०उ०१]

"जीवः पञ्चविंशकः स्वकल्पितचतुर्विंशतितत्त्वं परित्यज्य षड्विंशकः परमात्माहमिति निश्चयाज्जीवन्मुक्तो भवति ।।८।। [म०ब्रा०उ० २/४]

"तद्वांश्चक्षुरादिबाह्यप्रपञ्चोपरतो विगतप्रपञ्चगन्धः सर्वं जगदात्मत्वेन पश्यंस्त्यक्ताहंकारो ब्रह्माहमस्मीति चिन्तयन्निदं सर्वं यदयमात्मेति भावयन्कृतकृत्यो भवति ।।९।। [म०ब्रा०उ० २/४]

"प्राणो ह्येष यः सर्वभूतैर्विभाति
विजानन्विद्वान्भवते नातिवादी ।
आत्मक्रीड आत्मरतिः क्रियावा-
नेष ब्रह्मविदां वरिष्ठः ।।१०।।

[मु०उ० ३/१/४]

"यस्मिन्काले स्वमात्मानं योगी जानाति केवलम् ।
तस्मात्कालात्समारभ्य जीवन्मुक्तो भवेदसौ ।।११।।

[व० उ० २/४२]

अत्रात्मव्यतिरेकेण द्वितीयं यो न पश्यति ।
आत्मारामः स योगीन्द्रो ब्रह्मीभूतो भवेदिह ।।१२।।

[स्क० पु० का० ख० ४१/४७]

यथास्थितमिदं यस्य व्यवहारवतोऽपि च ।
अस्तङ्गतं स्थितं व्योम स जीवन्मुक्त उच्यते ।।१३।।
नोदेति नास्तमायाति सुखे दुःखे मनः प्रभा ।
यथाप्राप्तस्थितिर्यस्य स जीवन्मुक्त उच्यते ।।१४।।
यो जागर्ति सुषुप्तिस्थो यस्य जाग्रन्न विद्यते ।
यस्य निर्वासनो बोधः स जीवन्मुक्त उच्यते ।।१५।।
रागद्वेषभयादीनामनुरूपं चरन्नपि ।
योऽन्तर्व्योमवदच्छन्नः स जीवन्मुक्त उच्यते ।।१६।।
यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते ।
कुर्वतोऽकुर्वतो वापि स जीवन्मुक्त उच्यते ।।१७।।
यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ।
हर्षामर्षभयोन्मुक्तः स जीवन्मुक्त उच्यते ।।१८।।

यः समस्तार्थजालेषु व्यवहार्यपि शीतलः ।
परार्थेष्विव पूर्णात्मा स जीवन्मुक्त उच्यते ।।१९।।
प्रजहाति यदा कामान्सर्वांश्चित्तगतान्मुने ।
मयि सर्वात्मके तुष्टः स जीवन्मुक्त उच्यते ।।२०।।
चैत्यवर्जितचिन्मात्रे पदे परमपावने ।
अक्षुब्धचित्तो विश्रान्तः स जीवन्मुक्त उच्यते ।।२१।।
इदं जगदहं सोऽयं दृश्यजातमवास्तवम् ।
यस्य चित्ते न स्फुरति स जीवन्मुक्त उच्यते ।। २२।।

[व० उ० ४/२१-३०]

मयि जीवत्वमीशत्वं कल्पितं वस्तुतो न हि ।
इति यस्तु विजानाति स मुक्तो नात्र संशयः ।।२३।।[स० र० उ० ३३]
आपतत्सु यथाकालं सुखदुःखेष्वनारतः ।
न हृष्यति ग्लायति यः स जीवन्मुक्त उच्यते ।।२४।।
हर्षामर्षभयक्रोधकामकार्पण्यदृष्टिभिः ।
न परामृश्यते योऽन्तः स जीवन्मुक्त उच्यते ।।२५।।

[महो० २/४३-४४]

ईप्सितानीप्सिते न स्तो यस्यान्तर्वर्तिदृष्टिषु ।
सुषुप्तिवद्यश्चरति स जीवन्मुक्त उच्यते ।।२६।।
अध्यात्मरतिरासीनः पूर्णपावनमानसः ।
प्राप्तानुत्तमविश्रान्तिर्न किंचिदिह वाञ्छति ।
यो जीवति गतस्नेहः स जीवन्मुक्त उच्यते ।।२७।।
संवेद्येन हृदाकाशे मनागपि न लिप्यते ।
यस्यासावजडा संवित्स जीवन्मुक्त उच्यते ।।२८।।
रागद्वेषौ सुखं दुःखं धर्माधर्मौ फलाफले ।
यः करोत्यनपेक्ष्यैव स जीवन्मुक्त उच्यते ।।२९।।
मौनवान्निरहंभावो निर्मानो मुक्तमत्सरः ।
यः करोति गतोद्वेगः स जीवन्मुक्त उच्यते ।।३०।।
सर्वत्र विगतस्नेहो यः साक्षिवदवस्थितः ।
निरिच्छो वर्तते कार्ये स जीवन्मुक्त उच्यते ।।३१।।

येन धर्ममधर्मं च मनोमननमीहितम् ।
सर्वमन्तःपरित्यक्तं स जीवन्मुक्त उच्यते ।।३२।।
यावती दृश्यकलना सकलेयं विलोक्यते ।
सा येन सुष्ठु संत्यक्ता स जीवन्मुक्त उच्यते ।।३३।।
कट्वम्ललवणं तिक्तममृष्टं मृष्टमेव च ।
सममेव च यो भुङ्क्ते स जीवन्मुक्त उच्यते ।।३४।।
जरामरणमापच्च राज्यं दारिद्र्यमेव च ।
रम्यमित्येव यो भुङ्क्ते स जीवन्मुक्त उच्यते ।।३५।।
धर्माधर्मौ सुखं दुःखं तथा मरणजन्मनी ।
धिया येन सुसंत्यक्तं स जीवन्मुक्त उच्यते ।।३६।।
उद्वेगानन्दरहितः समया स्वच्छया धिया ।
न शोचति न चोदेति स जीवन्मुक्त उच्यते ।।३७।।
सर्वेच्छाः सकलाः शङ्काः सर्वेहाः सर्वनिश्चयाः ।
धिया येन परित्यक्ताः स जीवन्मुक्त उच्यते ।।३८।।
जन्मस्थितिविनाशेषु सोदयास्तमयेषु च ।
सममेव मनो यस्य स जीवन्मुक्त उच्यते ।।३९।।
न किंचन द्वेष्टि तथा न किंचिदपि काङ्क्षति ।
भुङ्क्ते यः प्राकृतान्भोगान्स जीवन्मुक्त उच्यते ।।४०।।

[महो० २/४६-६०]

सर्वाधिष्ठानसन्मात्रे निर्विकल्पे चिदात्मनि ।
यो जीवति गतस्नेहः स जीवन्मुक्त उच्यते।।४१।।

[अभ० उ० २/२७]

निर्विकल्पा च चिन्मात्रा वृत्तिः प्रज्ञेति कथ्यते ।
सा सर्वदा भवेद्यस्य स जीवन्मुक्त इष्यते ।।४२।।
देहेन्द्रियेष्वहंभाव इदंभावस्तदन्यके ।
यस्य नो भवतः क्वापि स जीवन्मुक्त इष्यते ।।४३।।
न प्रत्यग्ब्रह्मणोर्भेदं कदापि ब्रह्मसर्गयोः ।
प्रज्ञया यो विजानाति स जीवन्मुक्त इष्यते ।।४४।।

साधुभिः पूज्यमानोऽस्मिन्पीड्यमानोऽपि दुर्जनैः ।
समभावो भवेद्यस्य स जीवन्मुक्त इष्यते ।।४५।।
विज्ञातब्रह्मतत्त्वस्य यथापूर्वं न संसृतिः ।
अस्ति चेन्न स विज्ञातब्रह्मभावो बहिर्मुखः ।।४६।।

[अध्या० उ० ४४-४८]

हेयोपादेयकलने ममेत्यहमिहेति च ।
यस्याऽन्तः संपरिक्षीणे स जीवन्मुक्त उच्यते ।।४७।।

[यो० वा० ५/१६/२०]

आत्मतत्त्वैकनिष्ठस्य हर्षामर्षवशं मनः ।
यस्य नाऽऽयात्यसक्तोऽसौ जीवन्मुक्तः स कथ्यते ।।४।।

[यो० वा०५/६८/७]

सर्वारम्भपरित्यागी सर्वोपाधिविवर्जितः ।
सर्वाशासंपरित्यागी जीवन्मुक्त इति स्मृतः ।।४९।।

[यो० वा० ५/७४/३८]

तत्पदं सर्वसीमान्तमवलम्ब्य महायतिः ।
यः स्थितः स्थिरधीस्तज्ज्ञः स जीवन्मुक्त उच्यते ।।५०।।

[यो० वा० ५/७८/५४]

न सुखाय सुखं यस्य दुःखं दुःखाय यस्य नो ।
अन्तर्मुखमतेर्नित्यं स मुक्त इति कथ्यते ।।५१।।

[यो० वा० ६/२/१६९/१]

चिन्मात्रात्मनि विश्रान्तं यस्य चित्तमचञ्चलम् ।
तत्रैव रतिमायातं स जीवन्मुक्त उच्यते ।।५२।।
परमात्मनि विश्रान्तं यस्य व्यावृत्य नो मनः ।
रमतेऽस्मिन्पुनर्द्वये स जीवन्मुक्त उच्यते ।।५३।।

[यो० वा० ६/२/१६९/३-४]

यशःप्रभृतिना यस्मै हेतुनैव विना पुनः ।
भुवि भोगा न रोचन्ते स जीवन्मुक्त उच्यते ।।५४।।

[यो० वा० २/२/८]

चिदात्माहं परात्माहं निर्गुणोऽहं परात्परः ।
आत्ममात्रेण यस्तिष्ठेत्स जीवन्मुक्त उच्यते ।।५५।।

[ते० वि० उ०४/१]

देहत्रयातिरिक्तोऽहं शुद्धचैतन्यमस्म्यहम् ।
ब्रह्माहमिति यस्यान्तः स जीवन्मुक्त उच्यते ।।५६।।
यस्य देहादिकं नास्ति यस्य ब्रह्मेति निश्चयः ।
परमानन्दपूर्णो यः स जीवन्मुक्त उच्यते ।।५७।।

[ते०वि०उ०४/२-३]

नित्यानन्दः प्रसन्नात्मा ह्यन्यचिन्ताविवर्जितः ।
किंचिदस्तित्वहीनो यः स जीवन्मुक्त उच्यते ।।५८।।

[ते० वि० उ० ४/६-६/२]

न मे जाग्रन्न मे स्वप्नं न मे कारणमण्वपि ।
न मे तुरीयमिति यः स जीवन्मुक्त उच्यते ।।५९।।

[ते० वि० उ० ४/१०-१/९]

न मे जरा न मे बाल्यं न मे यौवनमण्वपि ।
अहं ब्रह्मास्म्यहं ब्रह्मास्म्यहं ब्रह्मेति निश्चयः ।
चिदहं चिदहं चेति स जीवन्मुक्त उच्यते ।।६०।।

[ते० उ० ४/२९-२९-१/२]

स्वयमेव स्वयं हंसः स्वयमेव स्वयं स्थितः ।
स्वयमेव स्वयं पश्येत्स्वात्मराज्ये सुखं वसेत् ।
स्वात्मानन्दं स्वयं भोक्ष्येत्स जीवन्मुक्त उच्यते ।।६१।।
स्वयमेवैकवीरोऽग्रे स्वयमेव प्रभुः स्मृतः ।
स्वस्वरूपे स्वयं स्वप्स्येत्स जीवन्मुक्त उच्यते ।।६२।।

[ते० वि० उ० ४/३१-३२]

शान्तसंसारकलनः कलावानपि निष्कलः ।
यस्य चित्तं विनिश्चिंतं स जीवन्मुक्त उच्यते ।।६३।।
वर्तमानेऽपि देहेऽस्मिञ्छायावदनुवर्तिनि ।
अहंताममताभावो जीवन्मुक्तस्य लक्षणम् ।।६४।।
अतीताननुसंधानं भविष्यदविचारणम् ।
औदासीन्यमपि प्राप्तं जीवन्मुक्तस्य लक्षणम् ।।६५।।

गुणदोषविशिष्टेऽस्मिन् स्वभावेन विलक्षणे ।
सर्वत्र समदर्शित्वं जीवन्मुक्तस्य लक्षणम् ।।६६।।
इष्टानिष्टार्थसम्प्राप्तौ समदर्शितयात्मनि ।
उभयत्राविकारित्वं जीवन्मुक्तस्य लक्षणम् ।।६७।।
ब्रह्मानन्दरसास्वादासक्तचित्ततया यतेः ।
अन्तर्बहिरविज्ञानं जीवन्मुक्तस्य लक्षणम् ।।६८।।
देहेन्द्रियादौ कर्तव्ये ममाहंभाववर्जितः ।
औदासीन्येन यस्तिष्ठेत्स जीवन्मुक्तलक्षणम् ।।६९।।
विज्ञात आत्मनो यस्य ब्रह्मभावः श्रुतेर्बलात् ।
भवबन्धविनिर्मुक्तः स जीवन्मुक्तलक्षणः ।।७०।।

[वि० चू० ४३१-४३८]

सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि ।
यः पश्यन्संचरत्येष जीवन्मुक्तोऽभिधीयते ।।७१।।

[शि० गी० १३/२९]

स एव धन्य आत्मज्ञः सर्वभावेषु यः समः ।
पश्यन् शृण्वन् स्पृशञ्जिघ्रन्नश्नन्निस्तर्षमानसः ।।७२।।
बहुनाऽत्र किमुक्तेन ज्ञाततत्त्वो महाशयः ।
भोगमोक्षनिराकांक्षी सदा सर्वत्र नीरसः ।।७३।।

[अष्टा०गी० १८/६८]

जगज्जीवादिरूपेण पश्यन्नपि परात्मवित् ।
न तत्पश्यति चिद्रूपं ब्रह्मवस्त्वेव पश्यति ।।७४।।

[व०उ०२/२७-२७-१/२] [पा० ब्र० उ० २४-२४-१/२]

चिन्मात्रं सर्वगं नित्यं सम्पूर्णसुखमद्वयम् ।
साक्षाद्ब्रह्मैव नान्योऽस्तीत्येवं ब्रह्मविदां स्थितिः ।।७५।।

[व०उ०२/२१-२१-१/२]

एवं रूपपरिज्ञानं यस्यास्ति परयोगिनः ।
कुत्रचिद्गमनं नास्ति तस्य पूर्णस्वरूपिणः ।।७६।।
आकाशमेकं सम्पूर्णं कुत्रचिन्न हि गच्छति ।
तद्वद्ब्रह्मात्मविच्छ्रेष्ठः कुत्रचिन्नैव गच्छति ।।७७।।

[पा०ब्र०उ० ३४-३५] [रू०हृ०उ० ५०-५१]

सर्वत्रानवधानस्य न किंचिद्वासना हृदि ।
मुक्तात्मनो वितृप्तस्य तुलना केन जायते ।।७८।।

[अष्टा०गी० १८/८९]

चिन्मात्रत्वं प्रयातस्य तीर्णमृत्योरचेतसः ।
यो भवेत्परमानन्दः केनाऽसावुपमीयते ।।७९।।

[यो०वा०६/१२१/१०]

आत्मविश्रान्तितृप्तेन निराशेन गतार्तिना ।
अन्तर्यदनुभूयेत तत्कथं कस्य कथ्यंते ।।८०।।

[अष्टा० गी० १८/९३]

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ।।८१।।

[मु० उ०२/२/८] [महो० ४/८२]

एषा ब्राह्मी स्थितिः स्वच्छा निष्कामा विगतामया ।
आदाय विहरन्नेवं संकटेषु न मुह्यति ।।८२ ।।

[महो० ६/७६]

## श्रीमद्भगवद्गीतासारः

गीतासारं प्रवक्ष्यामि सर्वगीतोत्तमोत्तमम् ।
कृष्णोऽर्जुनाय यामाह पुरा वै भुक्तिमुक्तिदाम् ।।१।।
गतासुरगतासुर्वा न शोच्यो देहवानजः ।
आत्माऽजरोऽमरोऽभेद्यस्तस्माच्छोकादिकं त्यजेत् ।।२।।
ध्यायतो विषयान्पुंसः सङ्गस्तेषूपजायते ।
सङ्गात्कामस्ततः क्रोधः क्रोधात्सम्मोह एव च ।।३।।
सम्मोहात्स्मृतिविभ्रंशो बुद्धिनाशात्प्रणश्यति ।
दुःसङ्गहानिः सत्सङ्गान्मोक्षकामी च कामनुत् ।।४।।
कामत्यागादात्मनिष्ठः स्थिरप्रज्ञस्तदोच्यते ।
या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।।५।।
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ।
आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते ।।६।।

नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन ।
तत्त्ववित्तु महाबाहो गुणकर्मविभागयोः ।।७।।
गुणा गुणेषु वर्तन्ते इति मत्वा न सज्जते ।
सर्वं ज्ञानप्लवेनैव वृजिनं संतरिष्यति ।।८।।
ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन ।
ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः ।।९।।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ।
सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि ।।१०।।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ।
शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ।।११।।
न हि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति ।
दैवी ह्येषा गुणमयी मम माया दुरत्यया ।।१२।।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ।
आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ।।१३।।
चतुर्विधा भजन्ते मां ज्ञानी चैकत्वमास्थितः ।
अक्षरं ब्रह्म परमं स्वभावोऽध्यात्ममुच्यते ।।१४।।
भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः ।
अधिभूतं क्षरो भावः पुरुषश्चाधिदैवतम् ।।१५।।
अधियज्ञोऽहमेवात्र देहे देहभृतां वर ।
अन्तकाले स्मरन्माञ्च मद्भावं यात्यसंशयः ।।१६।।
यं यं भावं स्मरन्नन्ते त्यजेद्देहं तमाप्नुयात् ।
प्राणं न्यस्य भ्रुवोर्मध्ये चान्ते प्राप्नोति मत्परम् ।।१७।।
ओमित्येकाक्षरं ब्रह्म वदन्देहं त्यजँस्तथा ।
ब्रह्मादिस्तम्बपर्यन्ताः सर्वे मम विभूतयः ।।१८।।
श्रीमन्तश्चोर्जिताः सर्वे ममांशाः प्राणिनः स्मृताः ।
अहमेको विश्वरूप इति ज्ञात्वा विमुच्यते ।।१९।।
क्षेत्रं शरीरं यो वेत्ति क्षेत्रज्ञः स प्रकीर्तितः ।
क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम ।।२०।।

महाभूतान्यहंकारो बुद्धिरव्यक्तमेव च ।
इन्द्रियाणि दशैकं च पंच चेन्द्रियगोचराः ।।२१।।
इच्छा द्वेषः सुखं दुःखं सङ्घातश्चेतना धृतिः।
एतत्क्षेत्रं समासेन सविकारमुदाहृतम् ।।२२।।
अमानित्वमदम्भित्वमहिंसाक्षान्तिरार्जवम् ।
आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ।।२३।।
इन्द्रियार्थेषु वैराग्यमनहङ्कार एव च ।
जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ।।२४।।
असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु ।
नित्यञ्च समचित्तत्वमिष्टानिष्टोपपत्तिषु ।।२५।।
मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ।
विविक्तदेशसेवित्वमरतिर्जनसंसदि ।।२६।।
अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम् ।
एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ।।२७।।
ज्ञेयं यत्तत्प्रवक्ष्यामि यं ज्ञात्वाऽमृतमश्नुते ।
अनादि परमं ब्रह्म सत्त्वं नाम तदुच्यते ।।२८।।
सर्वतः पाणिपादान्तं सर्वतोऽक्षिशिरोमुखम् ।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ।।२९।।
सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ।
असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ।।३०।।
बहिरन्तश्च भूतानामचरञ्चरमेव च ।
सूक्ष्मत्वात्तदविज्ञेयं दूरस्थञ्चान्तिकेऽपि यत् ।।३१।।
अविभक्तञ्च भूतेषु विभक्तमिव च स्थितम् ।
भूतभर्तृ च विज्ञेयं ग्रसिष्णु प्रभविष्णु च ।।३२।।
ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते ।
ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य धिष्ठितम् ।।३३।।
ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना ।
अन्ये सांख्येन योगेन कर्मयोगेन चापरे ।।३४।।

अन्ये त्वेवमजानन्तः श्रुत्वान्येभ्य उपासते ।
तेऽपि चाशु तरन्त्येव मृत्युं श्रुतिपरायणाः ।।३५।।
सत्त्वात्सञ्जायते ज्ञानं रजसो लोभ एव च ।
प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ।।३६।।
गुणा वर्तन्त इत्येव योऽवतिष्ठति नेङ्गते ।
मानावमानमित्रारितुल्यस्त्यागी स निर्गुणः ।।३७।।
ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम् ।
छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित् ।।३८।।
द्वौ भूतसर्गौ लोकेऽस्मिन्दैव आसुर एव च ।
अहिंसादिः क्षमा चैव दैवीसम्पत्तितो नृणाम् ।।३९।।
न शौचं नापि चाचारो ह्यासुरी सम्पदोद्भवः ।
नरकत्वात्क्रोधलोभकामस्तस्मात्त्रयं त्यजेत् ।।४०।।
यज्ञस्तपस्तथा दानं सत्त्वाद्यैस्त्रिविधं स्मृतम् ।
आयुः सत्त्वं बलारोग्यसुखायान्नं तु सात्त्विकम् ।।४१।।
दुःखशोकामयायान्नं तीक्ष्णरूक्षन्तु राजसम् ।
अमेध्योच्छिष्टपूत्यन्नं तामसं नीरसादिकम् ।।४२।।
यष्टव्यो विधिना यज्ञो निष्कामाय स सात्त्विकः ।
यज्ञः फलाय दम्भात्मा राजसस्तामसः क्रतुः ।।४३।।
श्रद्धामंत्रादिविध्युक्तं तपः शारीरमुच्यते ।
देवादिपूजाऽहिंसादि वाङ्मयं तप उच्यते ।।४४।।
अनुद्वेगकरं वाक्यं सत्यं स्वाध्यायसज्जपः ।
मानसं चित्तसंशुद्धेर्मौनमात्मविनिग्रहः ।।४५।।
सात्त्विकञ्च तपोऽकामं फलाद्यर्थन्तु राजसम् ।
तामसं परपीडायै सात्त्विकं दानमुच्यते ।।४६।।
देशादौ चैव दातव्यमुपकाराय राजसम् ।
अदेशादावचज्ञातं तामसं दानमीरितम् ।।४७।।
ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ।
यज्ञदानादिकं कर्म भुक्तिमुक्तिप्रदं नृणाम् ।।४८।।

अनिष्टमिष्टं मिश्रञ्च त्रिविधं कर्मणः फलम् ।
भवत्यत्यागिनां प्रेत्य न तु संन्यासिनां क्वचित् ।।४९।।
तामसः कर्मसंयोगान्मोहात्क्लेशभयादिकात् ।
राजसः सात्त्विकोऽकामात्पञ्चैते कर्महेतवः ।।५०।।
अधिष्ठानं तथा कर्ता करणञ्च पृथग्विधम् ।
विविधाश्च पृथक्चेष्टा दैवञ्चैवात्र पञ्चमम् ।।५१।।
एकज्ञानं सात्त्विकं स्यात्पृथग्ज्ञानन्तु राजसम् ।
अतत्त्वार्थन्तामसं स्यात्कर्माकामाय सात्त्विकम् ।।५२।।
कामाय राजसं कर्म मोहात्कर्म तु तामसम् ।
सिद्ध्यसिद्ध्योः समः कर्ता सात्त्विको राजसो ह्यपि ।।५३।।
शठोऽलसस्तामसः स्यात्कार्यादिधीश्च सात्त्विकी ।
कार्यार्थि सा राजसी स्याद्विपरीता तु तामसी ।।५४।।
मनोधृतिः सात्त्विकी स्यात्प्रीतिकामेति राजसी ।
तामसी तु प्रशोकादौ दुःखं सत्त्वात्तदन्तगम् ।।५५।।
सुखं तद्राजसञ्चाग्रे अन्ते दुःखन्तु तामसम् ।
यतः प्रवृत्तिर्भूतानां येन सर्वमिदन्ततम् ।।५६।।
स्वकर्मणा तमभ्यर्च्य विष्णुं सिद्धिञ्च विन्दति ।
कर्मणा मनसा वाचा सर्वावस्थासु सर्वदा ।।५७।।
ब्रह्मादिस्तम्बपर्यन्तं जगद्विष्णुञ्च वेत्ति यः ।
सिद्धिमाप्नोति भगवद्भक्तो भागवतो ध्रुवम् ।।५८।।

[आग्ने० पु० ३८/१-५८]

।।इत्याग्नेये (महा) आदिपुराणे गीतासारो
नामैकाशीत्यधिकत्रिशततमोऽध्यायः।।

*

यस्य पादांशुसंभूतं विश्वं भाति चराचरम् ।
तं वन्दे परमात्मानं स्वतन्त्रानन्दरूपिणम् ।।१।।
सच्चिदानन्दबोधाय शिष्यसंतापहारिणे ।
स्वतन्त्रानन्दरूपाय तस्मै श्रीगुरवे नमः ।।२।।
स्वच्छन्दोपात्तदेहाय विशुद्धज्ञानमूर्तये ।
सर्वस्मै सर्वबीजाय सर्वभूतात्मने नमः ।।३।।
नमस्ते सर्वभावाय ब्रह्मणेऽनन्तशक्तये ।
कृष्णाय वासुदेवाय योगानां पतये नमः ।।४।।
नमस्ते वासुदेवाय सर्वभूतक्षयाय च ।
हृषीकेश नमस्तुभ्यं प्रपन्नं पाहि मां प्रभो ।।५।।

## ॐ शान्तिः । शान्तिः ।। शान्तिः ।।।

## ।।समाप्तोऽयं ग्रन्थः ।।

## लेखक के अन्य अद्भुत ग्रन्थरत्न

- जीवन्मुक्ति-दर्पण
- वैराग्य-मार्तण्ड
- वेदान्तसारसर्वस्व

